ॐ

# बालव्युत्पत्तिः

लेखकः सम्पादकश्च
**डॉ. विश्वनाथधितालः**
न्यायाचार्यः (लब्धस्वर्णपदकः)

संस्कृति प्रकाशन, वाराणसी


Scanned by CamScanner

कृतिः - बालव्युत्पत्तिः
कृतिकार : - डॉ. विश्वनाथ-धितालः
दूरभाष : + 91-9452071687
E-mail : vdhital@yahoo.com

ISBN : 978-93-80756-19-6



प्रथमं संस्करणम् :- 2006
तृतीयं संस्करणम् :- 2012

मूल्यम् :- 75.00 रूप्यकाणि

मुद्रकः :- वीणा ग्राफिक्स, वाराणसी
मो. : 9451895438

प्रकाशकः:- **संस्कृति प्रकाशन, वाराणसी**
बी-32/32 ए-14, साकेत नगर, वाराणसी-5
फोन : 0542-2314403, मो0 : 919473952095
919415256054

सह प्रकाशन :- पुस्तक पथ


Scanned by CamScanner

# आशीर्वचनम्

श्रीविश्वनाथधितालविरचितस्य बालव्युत्पत्तिग्रन्थस्य सम्यगवलोकनं कृतम्। एतस्मिन् ग्रन्थे लेखकेन श्रमपूर्वकं न्यायपदार्थतत्त्वानाम् अध्ययनं विधाय न्यायशास्त्रस्य सर्वजनसुलभता यथा स्याद् इति विचार्य ग्रन्थस्यास्य रचना विहिता वर्तते। मन्ये ग्रन्थोऽयं सर्वेषां व्युत्पित्सूनां न्यायशास्त्र-प्रवेशार्थिनां कृते महदुपकारको भविष्यतीति। ग्रन्थकर्तुरेतादृशेन प्रयासेन सर्वत्र न्यायशास्त्रस्य विकाशो भवेदिति भगवन्तं परमेश्वरं प्रार्थये। एवञ्चैष इत्थं प्रकारेणैव विशिष्टानां ग्रन्थानां लेखनं प्रसारणं च कुर्वन् दीर्घायुः कीर्तिमाँश्च भूयात्।

प्रो. वशिष्ठत्रिपाठी
भूतपूर्व-न्यायवैशेषिकविभागाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी।


Scanned by CamScanner

# Foreword

Mastery of Nyaya facilitates real understanding of any other system of knowledge. But it is not easy to understand Nyaya especially for the neophytes. They need books which would be short, simple and accurate. Writing such books is not easy. Many efforts have been done in the past. Nyaycarya Visanath Dhital has made a fresh attempt in his work Bālavyutpattih. He is largely successful in fulfilling the criteria set forth above. What needs to be especially mentioned is the novelty of presentation. At the bottom of each page there is a famous adage which will be imprinted in the memory of young learner of this book even without their knowing it. These are guiding sign posts for the learners to build a worthy life. The selection of these adages and choice of pages where they are reproduced also speak of careful thinking on the part of the author. This is especially true about the first two and the last one. This part of the content is not directly connected to Nyaya or the learning of it. However, its inclusion brings extra benefit to the young learners who need to grow as worthy members of the human race.

So far as the actual content of it is concerned, the book *collects* in different sections *definitions* of major items or technical things and words discussed in the Nyaya-visesika literature on the one hand and *similarities and dissimilarities* of broad kinds of entities (padartha-s) on the other. These sections are followed are followed by explanations of the definitions and points of similarities and dissimilarities enumerated earlier. This arrangement will enable the beginning students to easily memorize many of the major doctrines of Nyay-Vaiseika theory of knowledge (pramanapariccheda) and ontology (prameyapariccheda). This book will be found very useful also by senior scholars of other systems of knowledge- indigenous or foreign-who want to begin learning Nyaya and acquaint them with it from the scratch.

I am satisfied with the plan of the book and its quality. i am sure that it will eminently serve the purpose for which it has been written. I pray to God that He grants Visvanath long active life so that he can serve the cause of such a great system of knowledge - a great achievement of Indian culture-as Nyaya with love and dedication.

**P.K. Mukhopadhyay**
Formerly Professor of Philosophy
at Jadavpur University and Visiting
Professor at Faculty SVDV of BHU.


Scanned by CamScanner

# निवेदनम्

इयं बालव्युत्पत्तिः न्यायशास्त्रप्रवेशार्थिनां जिज्ञासूनां हितकामनया निर्मिताऽस्ति। अत्र विभिन्नस्थानेषु विद्यमानानां लक्षणानां, नियमानां, साधर्म्यादीनाम्, अनुमानप्रयोगादीनाञ्च समावेशोऽस्ति। लक्षणसमन्वयः साधर्म्यवैधर्म्यसमन्वयश्च विहितो वर्तते। शाब्दबोधप्रकारोऽप्यत्र प्रदर्शितोऽस्ति। अस्य ग्रन्थस्य सम्यगध्ययने न्यायशास्त्रप्रवेशो नैव काठिन्यमिति मम विश्वासो वर्तते। मन्ये ग्रन्थोऽयं जिज्ञासूनां महदुपकारं करिष्यतीति।

अस्य ग्रन्थस्यावलोकनं कृत्वा स्वस्याशीर्वचनैरस्मान् कृतार्थं कृतवद्भ्यः परमपूज्य-गुरुवर्येभ्यः **प्रो. वशिष्ठत्रिपाठि**महाभागेभ्यो भूरिशः कृतज्ञतां ज्ञापयामि। एवञ्च ग्रन्थस्यैतस्य प्रुफ्-शोधनादिकार्ये अत्यन्तं साहाय्यं कृतवद्भ्यो मम मित्रवर्येभ्यः श्रीवैकुण्ठ-बलराम-नवराज-रामप्रसादेभ्यो हृदयेन धन्यवादं च ज्ञापयामि।

अन्ते च-

> **गच्छतः स्खलनं क्वाऽपि भवत्येव प्रमादतः।**
> **हसन्ति दुर्जनास्तत्र समादधति सज्जनाः।।**

इत्येवं सहृदयान् विज्ञापयन् विरमामि।

महाशिवरात्रि, सम्वत् २०६३ — विदुषामनुचरः
ललिताघाट, वाराणसी — **विश्वनाथः**

> **अस्मिन् संस्करणे पूर्वसंस्करणे विद्यमानानां त्रुटीनां यथासम्भवं परिहारो विहितो वर्तते। इतोऽपि विद्यमानानां त्रुटीनां परिहारो दोषज्ञानां निर्देशानुसारं क्रमशः भविष्यत्येव। छात्राणामाग्रहकारणाद् ग्रन्थस्यान्ते तर्कसंग्रहोऽपि योजितो वर्तते। ग्रन्थस्यैतस्याध्ययनं विधायाशीर्वचनप्रदातृभ्यः समादरणीयाचार्येभ्यः पी. के. मुखोपाध्यायमहोदयेभ्यो हार्दिकीं कृतज्ञतां समर्पयामि। एवमेवास्य तृतीयसंस्करणस्य प्रकाशने येषां महानुभावानां साहाय्यं लब्धं तेभ्यो हार्दिकीं कृतज्ञतां वितीर्य ग्रन्थमिमञ्च भगवन्तं श्रीविश्वनाथं सादरं समर्पयामि।**
>
> **सम्पादकः**


Scanned by CamScanner

# अनुक्रमणिका







Scanned by CamScanner

ॐ

# बालव्युत्पत्तिः

नत्वा देवगुरोः पादं बालकानां हिताय वै।
बालव्युत्पत्तिनाम्नीयं विश्वनाथेन रच्यते।।

## लक्षणसमन्वयप्रकरणम्

**पदजन्यप्रतीतिविषयत्वं पदार्थस्य लक्षणम्।**

पदश्रवणानन्तरं पदार्थानां प्रतीतिर्जायते। अतः सर्वे पदार्थाः पदजन्यप्रतीतिविषयाः भवन्ति। तथा च सर्वेषु पदार्थेषु पदजन्यप्रतीतिविषयत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः।

**१. गुणवत्त्वं द्रव्यस्य लक्षणम्।**

गुणाः सर्वेषु द्रव्येषु तिष्ठन्ति। अतो गुणवत् पदेन द्रव्याणां ग्रहो भवति। गुणवत्त्वं च द्रव्य इति लक्षणसमन्वयः। अत्र "उत्पन्नं द्रव्यं क्षणं निर्गुणं निष्क्रियञ्च तिष्ठति" इति न्यायेन आद्यक्षणे घटे गुणवत्त्वलक्षणस्य अव्याप्तिः। तथा च गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वं द्रव्यस्य लक्षणम्। गुणसमानाधिकरणा (गुणस्याधिकरणे वर्तमाना) अथ च सत्ताभिन्ना या जातिः, तादृशजातिमत्त्वं द्रव्यस्य लक्षणमित्यर्थः। अत्र च गुणाधिकरणे द्रव्ये वर्तमाना सत्ताभिन्नजातिः = द्रव्यत्वजातिः, तादृशजातिमत्त्वस्य सर्वेषु द्रव्येषु विद्यमानत्वाल्लक्षणसमन्वयः। अत्र गुणसमानाधिकरणजातिमत्त्वमित्येवोक्तौ, गुणाधिकरणे द्रव्ये वर्तमाना जातिः सत्ताजातिरपि तादृशजातिमत्त्वस्य गुणादौ सत्त्वादतिव्याप्तिः। सत्ताभिन्नजातिमत्त्वमित्येवोक्तौ सत्ताभिन्न-जातिर्गुणत्वकर्मत्वादिजातिः तादृशजातिमत्त्वस्य गुणादौ सत्त्वादतिव्याप्तिः। अत उभयोः पदयोरुपादानम्।




**२. द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वं गुणस्य लक्षणम्।**

गुणो द्रव्यकर्मभ्यां भिन्नो वर्ततेऽतो गुणे द्रव्यकर्मभिन्नत्वमस्ति। गुणः सामान्यवान् वर्ततेऽतो गुणे सामान्यवत्त्वमपि अस्तीति लक्षणसमन्वयः। अत्र द्रव्यकर्मभिन्नत्वमात्रोक्तौ




Scanned by CamScanner

सामान्यादावतिव्याप्तिः। सामान्यवत्त्वकथने च सामान्यादौ सामान्यवत्त्वाभावान्नातिव्याप्तिः। सामान्यवत्त्वमात्रकथने च द्रव्यकर्मणोरपि सामान्यवत्त्वसत्त्वादतिव्याप्तिः। अतो द्रव्यकर्म-भिन्नत्वपदोपादानम्।

**३. संयोगभिन्नत्वे सति संयोगाऽसमवायिकारणत्वं कर्मणो लक्षणम्।**

कर्म संयोगात्भिन्नं वर्तत इति कर्मणि संयोगभिन्नत्वमस्ति। हस्तद्वयस्य संयोगं प्रति हस्तद्वयं समवायिकारणं भवति, हस्ते वर्तमाना क्रिया (कर्म) च असमवायिकारणं भवतीति संयोगाऽसमवायिकारणत्वमपि कर्मणि वर्तत इति लक्षणसमन्वयः। अत्र संयोगभिन्नत्वमात्रोपादाने घटपटादावतिव्याप्तिः। संयोगाऽसमवायिकारणत्वमात्रोपादाने च- अवयविसंयोगं प्रति अवयवसंयोगोऽसमवायिकारणं भवति, यथा शरीरवृक्षसंयोगं प्रति हस्तवृक्षसंयोगोऽसमवायिकारणं भवति। तत्र संयोगात्मककार्यस्य असमवायिकारणमपि संयोगो वर्तते। अतः संयोगाऽसम-वायिकारणत्वस्य संयोगेऽपि सत्त्वादतिव्याप्तिः। संयोगभिन्नत्वपदोपादाने च संयोगे संयोगभिन्नत्वाभावान्नातिव्याप्तिः।

**४. नित्यत्वे सति अनेकसमवेतत्वं सामान्यस्य लक्षणम्।**

घटत्वादिसामान्यं नित्यं भवतीति तत्र नित्यत्वं वर्तते। घटत्वमनेकेषु घटेषु समवायसम्बन्धेन तिष्ठतीति तत्र अनेकसमवेतत्वमपि वर्तत इति लक्षणसमन्वयः। नित्यत्वमात्रोपादाने गगनादीनामपि नित्यत्वात् तत्रातिव्याप्तिः। अनेकसमवेतत्वमात्रोपादाने च पटस्यापि अनेकतन्तुषु समवायसम्बन्धेन वर्तमानत्वात् तत्रातिव्याप्तिः। नित्यत्वपदोपादाने च पटादौ नित्यत्वाभावान्नातिव्याप्तिः।

**५. स्वतोव्यावृत्तत्वे सति नित्यद्रव्यवृत्तित्वं विशेषस्य लक्षणम्।**

परमाणुषु परस्परं भेदसाधको विशेषः। किन्तु विशेषेषु परस्परं भेदसाधनाय विशेषान्तरस्यापेक्षा नैव भवति तेषां स्वतोव्यावृत्तत्वात्। अतः स्वतोव्यावृत्तत्वं विशेषेषु वर्तते। एवं विशेषा नित्यद्रव्येषु वर्तन्त इति तत्र नित्यद्रव्यवृत्तित्वं वर्तत एव, अतो लक्षणसमन्वयः। अत्र यद्यपि स्वतोव्यावृत्तत्वमित्येव लक्षणं साधु, तथापि विशेषाणां स्थानकथनाय विशेष्यदलं न त्वतिव्याप्त्यादिदोषवारणाय।

**६. नित्यत्वे सति सम्बन्धत्वं समवायस्य लक्षणम्।**

समवायस्य नित्यत्वात्तत्र नित्यत्वं वर्तते। एवं समवायस्य सम्बन्धत्वात्तत्र सम्बन्धत्वमपि वर्तत इति लक्षणसमन्वयः। नित्यत्वमात्रोक्तौ गगनादावतिव्याप्तिः। सम्बन्धत्वमात्रोक्तौ संयोगादावतिव्याप्तिः। अत उभयोः पदयोरुपादानम्।

**७. प्रतियोगिज्ञानाधीनज्ञानविषयत्वमभावस्य लक्षणम्।**

यावत् प्रतियोगिनो ज्ञानं न भवति तावद् अभावज्ञानं न सम्भवति। अतः प्रतियोगिज्ञाना-धीनज्ञानम् अभावज्ञानम्, तद्विषयत्वस्य अभावे वर्तमानत्वाल्लक्षणसमन्वयः।

❐

---

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।**

सामान्यादावतिव्याप्तिः। सामान्यवत्त्वकथने च सामान्यादौ सामान्यवत्त्वाभावान्नातिव्याप्तिः। सामान्यवत्त्वमात्रकथने च द्रव्यकर्मणोरपि सामान्यवत्त्वसत्त्वादतिव्याप्तिः। अतो द्रव्यकर्म-भिन्नत्वपदोपादानम्।

**३. संयोगभिन्नत्वे सति संयोगाऽसमवायिकारणत्वं कर्मणो लक्षणम्।**

कर्म संयोगात्भिन्नं वर्तत इति कर्मणि संयोगभिन्नत्वमस्ति। हस्तद्वयस्य संयोगं प्रति हस्तद्वयं समवायिकारणं भवति, हस्ते वर्तमाना क्रिया (कर्म) च असमवायिकारणं भवतीति संयोगाऽसमवायिकारणत्वमपि कर्मणि वर्तत इति लक्षणसमन्वयः। अत्र संयोगभिन्नत्वमात्रोपादाने घटपटादावतिव्याप्तिः। संयोगाऽसमवायिकारणत्वमात्रोपादाने च- अवयविसंयोगं प्रति अवयवसंयोगोऽसमवायिकारणं भवति, यथा शरीरवृक्षसंयोगं प्रति हस्तवृक्षसंयोगोऽसमवायिकारणं भवति। तत्र संयोगात्मककार्यस्य असमवायिकारणमपि संयोगो वर्तते। अतः संयोगाऽसम-वायिकारणत्वस्य संयोगेऽपि सत्त्वादतिव्याप्तिः। संयोगभिन्नत्वपदोपादाने च संयोगे संयोगभिन्नत्वाभावान्नातिव्याप्तिः।

**४. नित्यत्वे सति अनेकसमवेतत्वं सामान्यस्य लक्षणम्।**

घटत्वादिसामान्यं नित्यं भवतीति तत्र नित्यत्वं वर्तते। घटत्वमनेकेषु घटेषु समवायसम्बन्धेन तिष्ठतीति तत्र अनेकसमवेतत्वमपि वर्तत इति लक्षणसमन्वयः। नित्यत्वमात्रोपादाने गगनादीनामपि नित्यत्वात् तत्रातिव्याप्तिः। अनेकसमवेतत्वमात्रोपादाने च पटस्यापि अनेकतन्तुषु समवायसम्बन्धेन वर्तमानत्वात् तत्रातिव्याप्तिः। नित्यत्वपदोपादाने च पटादौ नित्यत्वाभावान्नातिव्याप्तिः।

**५. स्वतोव्यावृत्तत्वे सति नित्यद्रव्यवृत्तित्वं विशेषस्य लक्षणम्।**

परमाणुषु परस्परं भेदसाधको विशेषः। किन्तु विशेषेषु परस्परं भेदसाधनाय विशेषान्तरस्यापेक्षा नैव भवति तेषां स्वतोव्यावृत्तत्वात्। अतः स्वतोव्यावृत्तत्वं विशेषेषु वर्तते। एवं विशेषा नित्यद्रव्येषु वर्तन्त इति तत्र नित्यद्रव्यवृत्तित्वं वर्तत एव, अतो लक्षणसमन्वयः। अत्र यद्यपि स्वतोव्यावृत्तत्वमित्येव लक्षणं साधु, तथापि विशेषाणां स्थानकथनाय विशेष्यदलं न त्वतिव्याप्त्यादिदोषवारणाय।

**६. नित्यत्वे सति सम्बन्धत्वं समवायस्य लक्षणम्।**

समवायस्य नित्यत्वात्तत्र नित्यत्वं वर्तते। एवं समवायस्य सम्बन्धत्वात्तत्र सम्बन्धत्वमपि वर्तत इति लक्षणसमन्वयः। नित्यत्वमात्रोक्तौ गगनादावतिव्याप्तिः। सम्बन्धत्वमात्रोक्तौ संयोगादावतिव्याप्तिः। अत उभयोः पदयोरुपादानम्।

**७. प्रतियोगिज्ञानाधीनज्ञानविषयत्वमभावस्य लक्षणम्।**

यावत् प्रतियोगिनो ज्ञानं न भवति तावद् अभावज्ञानं न सम्भवति। अतः प्रतियोगिज्ञाना-धीनज्ञानम् अभावज्ञानम्, तद्विषयत्वस्य अभावे वर्तमानत्वाल्लक्षणसमन्वयः।

❑

१. गन्धवत्त्वं पृथिव्या लक्षणम्।

गन्धः पृथिव्यां वर्तत इति गन्धवती पृथिवी भवति। तत्र गन्धवत्त्वस्य विद्यमानत्वाल्लक्षणसमन्वयः। ननु कालस्य जगदाधारतया गन्धवत्त्वं कालेऽपि विद्यते, अतोऽतिव्याप्तिरिति चेन्न, समवायसम्बन्धेन गन्धवत्त्वस्य विवक्षितत्वात्। समवायसम्बन्धेन गन्धवत्त्वस्य काले विरहान्नातिव्याप्तिः। अत्र "उत्पन्नं द्रव्यं क्षणं निर्गुणं निष्क्रियञ्च तिष्ठति" इति न्यायेन उत्पत्तिकालीनघटे गन्धवत्त्वलक्षणस्याऽव्याप्तिरत उच्यते **गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणमिति।** गन्धसमानाधिकरणा अथ च द्रव्यत्वव्याप्या या जातिः, तादृशजातिमत्त्वं पृथिव्या लक्षणमित्यर्थः। अत्र च पृथिवीत्वजातिः गन्धाधिकरणे पृथिव्यां वर्ततेऽतो गन्धसमानाधिकरणा भवति। एवं द्रव्यत्वस्य न्यूनदेशवृत्तितया द्रव्यत्वव्याप्याऽपि भवति। तादृशजातिमत्त्वस्य सर्वस्यामपि पृथिव्यां विद्यमानत्वाल्लक्षणसमन्वयः। गन्धसमानाधिकरणजातिमत्त्वमित्येवोक्तौ गन्धसमानाधिकरणजातिः सत्ताजातिरपि, तादृशजातिमत्त्वस्य जलादावपि वर्तमानत्वादतिव्याप्तिः। अतो जातौ द्रव्यत्वव्याप्यत्वविशेषणम्। सत्तायाञ्च द्रव्यत्वव्याप्यत्वाभावान्नातिव्याप्तिः। द्रव्यत्वव्याप्यजातिमत्त्वमित्येवोक्तौ द्रव्यत्वव्याप्यजातिर्जलत्वादिजातिः, तादृशजातिमत्त्वस्य जलादावपि सत्त्वादतिव्याप्तिः। अतो जातौ गन्धसामानाधिकरण्यविशेषणम्। जलत्वादौ च गन्धसामानाधिकरण्याभावान्नातिव्याप्तिः।

२. **शीतस्पर्शवत्त्वं जलस्य लक्षणम्।**

शीतस्पर्शो जले तिष्ठतीति शीतस्पर्शवत्त्वलक्षणस्य जले विद्यमानत्वाल्लक्षणसमन्वयः। अत्रापि शीतस्पर्शवत्त्वस्य कालादावपि विद्यमानत्वात् तत्रातिव्याप्तिवारणाय समवायसम्बन्धेन शीतस्पर्शवत्त्वमिति लक्षणं बोध्यम्। पुनश्च उत्पत्तिकालावच्छिन्नजलेऽव्याप्तिवारणाय शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमिति लक्षणं स्वीकर्तव्यम्। अत्र च शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिः जलत्वजातिः, तादृशजातिमत्त्वस्य सर्वत्र जले विद्यमानत्वाल्लक्षणसमन्वयः। पदकृत्यञ्च पूर्ववदेव।

३. **उष्णस्पर्शवत्त्वं तेजसो लक्षणम्।**

उष्णस्पर्शस्तेजसि विद्यत इति उष्णस्पर्शवत्त्वलक्षणस्य तेजसि सत्त्वाल्लक्षणसमन्वयः। कालादावतिव्याप्तिवारणाय समवायसम्बन्धेन उष्णस्पर्शवत्त्वमिति बोध्यम्। उत्पन्नतेजस्यव्याप्तिवारणाय उष्णस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमिति लक्षणमवसेयम्। तादृशतेजस्त्वजातिमत्त्वस्य तेजसि सत्त्वाल्लक्षणसमन्वयः।

४. **रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम्।**

वायौ रूपं नास्ति अतो वायौ रूपरहितत्वं वर्तते। एवं वायौ स्पर्शस्य विद्यमानत्वात् तत्र स्पर्शवत्त्वमपि वर्तत इति लक्षणसमन्वयः। रूपरहितत्वविशिष्टस्पर्शवत्त्वस्य कालेऽपि विद्यमानत्वात् तत्रातिव्याप्तिवारणाय समवायसम्बन्धेन रूपरहितत्वविशिष्टस्पर्शवत्त्वं वायोर्लक्षण-




Scanned by CamScanner

मिति। पुनश्च उत्पत्तिकालावच्छिन्नवायावव्याप्तिवारणाय रूपरहितत्वविशिष्टस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमिति लक्षणं बोध्यम्।

**५. शब्दाश्रयत्वमाकाशस्य लक्षणम्।**

शब्द आकाशे तिष्ठतीति शब्दाश्रयत्वस्य आकाशे विद्यमानत्वाल्लक्षणसमन्वयः। अत्रापि कालादावतिव्याप्तिवारणाय समवायसम्बन्धेन शब्दाश्रयत्वमाकाशस्य लक्षणमित्यवधेयम्।

**६. अतीतादिव्यवहाराऽसाधारणकारणत्वं कालस्य लक्षणम्।**

अतीतादिव्यवहारः = अतीतः, वर्तमानः, भविष्यन्, इत्यादिशब्दप्रयोगः, तस्याऽसाधारणकारणं काल इति अतीतादिव्यवहारासाधारणकारणत्वस्य काले विद्यमानत्वाल्लक्षणसमन्वयः। अत्र अतीतादिव्यवहारस्य शब्दात्मकत्वेन तादृशव्यवहाराऽसाधारणकारणत्वस्य गगनेऽपि सत्त्वादतिव्याप्तिः। तद्वारणाय अतीतादिव्यवहाराऽसाधारणनिमित्तकारणत्वं कालस्य लक्षणमित्युच्यते। तथा च गगनस्य तादृशशब्दात्मकव्यवहारस्य समवायिकारणत्वेन निमित्तकारणत्वाभावान्नातिव्याप्तिः। एवमपि कण्ठताल्वाद्यभिघातस्य तादृशव्यवहाराऽसाधारणनिमित्तकारणत्वेन तत्रातिव्याप्तिरिति चेन्न, विभुत्वस्यापि प्रविष्टत्वात्। तथा च विभुत्वे सति अतीतादिव्यवहाराऽसाधारणनिमित्तकारणत्वं कालस्य लक्षणमिति। इत्थञ्च कण्ठताल्वाद्यभिघाते विभुत्वाभावान्नातिव्याप्तिः।

**७. प्राच्यादिव्यवहाराऽसाधारणकारणत्वं दिशो लक्षणम्**

प्राच्यादिव्यवहारः = इयं प्राची, इयमवाची, इयं प्रतीची, इयमुदीची, इत्यादिशब्दप्रयोगः, तस्याऽसाधारणं कारणं दिग् भवतीति प्राच्यादिव्यवहाराऽसाधारणकारणत्वस्य दिशि सत्त्वाल्लक्षणसमन्वयः। अत्रापि पूर्ववद् गगनेऽतिव्याप्तिवारणाय प्राच्यादिव्यवहाराऽसाधारणनिमित्तकारणत्वं लक्षणं बोध्यम्। कण्ठताल्वाद्यभिघातेऽतिव्याप्तिवारणाय विभुत्वे सतीति विशेषणमपि देयम्। तथा च विभुत्वे सति प्राच्यादिव्यवहाराऽसाधारणनिमित्तकारणत्वं दिशो लक्षणमिति फलितम्।

**८. ज्ञानाश्रयत्वमात्मनो लक्षणम्।**

ज्ञानम् आत्मनि तिष्ठतीति ज्ञानाश्रयत्वस्य आत्मनि सत्त्वाल्लक्षणसमन्वयः। ज्ञानस्य कालिकसम्बन्धेन कालादावपि वर्तमानत्वात् समवायसम्बन्धेन ज्ञानाश्रयत्वं बोध्यम्। परमात्मा समवायसम्बन्धेन नित्यज्ञानाश्रयो वर्तते‌ऽतः समवायसम्बन्धेन नित्यज्ञानवत्त्वमीश्वरस्य लक्षणम्। जीवात्मनि समवायसम्बन्धेन सुखादिकमुत्पद्यते इति सुखसमवायिकारणं जीवात्मा वर्ततेऽतः सुखादिसमवायिकारणत्वं जीवात्मनो लक्षणमिति।

**९. सुखादिसाक्षात्कारकारणत्वे सति इन्द्रियत्वं मनसो लक्षणम्।**

आत्मनि-उत्पन्नस्य सुखादेः साक्षात्कारः (प्रत्यक्षम्) मनसा जायते अतो मनसि सुखादिसाक्षात्कारकारणत्वं वर्तते। एवं मनस इन्द्रियत्वेन तत्र इन्द्रियत्वमपि वर्तते। अतो

लक्षणसमन्वयः। अत्र इन्द्रियत्वमात्रोपादाने चक्षुरादावतिव्याप्तिः। सुखादिसाक्षात्कार-कारणत्वमात्रोक्तौ तु सुखादिसाक्षात्कारं प्रति आत्मनोऽपि कारणत्वात् तत्रातिव्याप्तिः। अत इन्द्रियत्वपदोपादानम्। आत्मनि च इन्द्रियत्वाभावान्नातिव्याप्तिः।

मनसो लघुलक्षणान्तरमप्यत्र विचार्यते-

**स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम्।**

मनसि स्पर्शो नास्ति। अतः स्पर्शरहितत्वं मनसि वर्तते। एवं मनः क्रियावद् वर्तत इति क्रियावत्त्वमपि मनसि वर्तत इति लक्षणसमन्वयः। अत्र क्रियावत्त्वमात्रोक्तौ पृथिव्यादावतिव्याप्तिः। अतः स्पर्शरहितत्वविशेषणम्। तथा च पृथिव्यादौ स्पर्शरहितत्वाभावान्नातिव्याप्तिः। स्पर्शरहितत्वमात्रोक्तौ च गगनादावतिव्याप्तिरिति क्रियावत्त्वपदोपादानम्। गगनादौ च क्रियावत्त्वाभावान्नातिव्याप्तिः।

❐

**१. चक्षुर्मात्रग्राह्यत्वे सति गुणत्वं रूपस्य लक्षणम्।**

अत्र चक्षुर्ग्राह्यत्वं नाम चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वम्। मात्रपदस्य इतरव्यावर्तकत्वार्थकत्वेन चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रूपस्य लक्षणमिति फलितम्। (चक्षुरिन्द्रियजन्यप्रत्यक्षम् = 'इदं रूपम्' इत्याद्याकारकं प्रत्यक्षम्।) रूपे च चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वस्य चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वस्य गुणत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। अत्र च गुणत्वपदानुपादाने "येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनैवेन्द्रियेण तद्गता जातिस्तदभावश्च गृह्यते"। इति न्यायेन रूपत्वे चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वस्य चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वस्य च विद्यमानत्वादतिव्याप्तिरतो गुणत्वपदोपादानम्। तदुपादाने च रूपत्वे गुणत्वाभावान्नातिव्याप्तिः। चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वमित्येवोक्तौ च सङ्ख्यादावपि चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वस्य गुणत्वस्य च विद्यमानत्वादतिव्याप्तिः। चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वपदोपादाने च सङ्ख्यादौ चक्षुर्भिन्नत्वगिन्द्रियजन्यप्रत्यक्षविषयत्वस्यैव विद्यमानत्वात्, तादृशप्रत्यक्षाऽविषयत्वस्याऽविद्यमानत्वान्नातिव्याप्तिः। चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति गुणत्वमित्येवोक्तौ धर्माद्यतीन्द्रियगुणेषु चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वस्य गुणत्वस्य च विद्यमानत्वादतिव्याप्तिः। चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वपदोपादाने च धर्मादिगुणेषु चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वाभावान्नातिव्याप्तिः।

**ननु प्रभाघटसंयोगे चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वस्य चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वस्य गुणत्वस्य च विद्यमानत्वादतिव्याप्तिरिति चेन्न, गुणपदेन विशेषगुणस्य विवक्षितत्वात्, संयोगस्य च सामान्यगुणत्वान्न तत्रातिव्याप्तिः। न च गुणपदेन विशेषगुणस्य**

---

**विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः।**





Scanned by CamScanner

विवक्षितत्वात् सङ्ख्यादावतिव्याप्तिविरहात् सङ्ख्यादावतिव्याप्तिनिवारणाय प्रविष्टस्य चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वपदस्य (मात्रपदस्य) वैयर्थ्यमिति वाच्यम्, चक्षुरिन्द्रियजन्य-प्रत्यक्षविषयत्वे सति विशेषगुणत्वमात्रस्य लक्षणत्वे जलमात्रवृत्तिसांसिद्धिकद्रवत्वेऽतिव्याप्तिस्तत्र चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वस्य विशेषगुणत्वस्य च विद्यमानत्वात्। अतो न चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वपदस्य व्यर्थत्वम्। तदुपादाने च सांसिद्धिकद्रवत्वे चक्षुर्भिन्नत्वगिन्द्रियजन्यप्रत्यक्षविषयत्वस्यैव विद्यमानत्वान्नातिव्याप्तिः। ननु तथापि परमाणुरूपे चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वस्य विरहादव्याप्तिरिति चेद्, अत्रोच्यते **चक्षुर्भिन्नेन्द्रियजन्य-प्रत्यक्षाऽविषय–चक्षुरिन्द्रियजन्यप्रत्यक्षविषयजातिमत्त्वे सति गुणत्वं रूपस्य लक्षणमिति।** अत्र च चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषया अथ च चक्षुरिन्द्रियजन्यप्रत्यक्षविषया जातिः = रूपत्वजातिः, तादृशजातिमत्त्वस्य परमाणुरूपेऽपि विद्यमानत्वाल्लक्षणसमन्वयः। अत्र च संयोगत्वजातेश्चक्षुर्भिन्नत्वगिन्द्रियजन्यप्रत्यक्षविषयत्वात्, चक्षुर्भिन्नेन्द्रियजन्य-प्रत्यक्षाऽविषयचक्षुरिन्द्रियजन्यप्रत्यक्षविषयजातिपदेन संयोगत्वजातेर्ग्रहणाऽसम्भवान्न प्रभाघट-संयोगेऽतिव्याप्तिरिति विशेषपदं नोपादेयमेव। अत्र च गुणत्वपदानुपादाने चक्षुर्भिन्नेन्द्रियजन्य-प्रत्यक्षाऽविषया अथ च चक्षुरिन्द्रियजन्यप्रत्यक्षविषया जातिः सुवर्णत्वजातिः, तादृशजातिमत्त्वस्य सुवर्णादौ सत्त्वादतिव्याप्तिरिति गुणत्वपदोपादानम्। तदुपादाने च सुवर्णे गुणत्वाभावान्नातिव्याप्तिः।

**२. रसनाग्राह्यत्वे सति गुणत्वं रसस्य लक्षणम्।**

रसनाग्राह्यत्वं नाम रसनेन्द्रियजन्यप्रत्यक्षविषयत्वम्। तथा च रसनेन्द्रियजन्य-प्रत्यक्षविषयत्वे सति गुणत्वं रसस्य लक्षणम्। रसे च रसनेन्द्रियजन्यप्रत्यक्षविषयत्वस्य गुणत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। रसनेन्द्रियजन्यप्रत्यक्षविषयत्वमात्रोक्तौ रसत्वेऽतिव्याप्तिः। गुणत्वमात्रोक्तौ च रूपादावतिव्याप्तिः। अत उभयोः पदयोरुपादानम्। अत्रापि पूर्ववद् रसनेन्द्रियजन्यप्रत्यक्षविषयत्वस्य परमाणुरसे विरहादव्याप्तिरिति तद्वारणाय रसनेन्द्रियजन्यप्रत्यक्षविषयजातिमत्त्वं रसस्य लक्षणमिति विवक्षणीयम्। तथा च रसनेन्द्रियजन्य-प्रत्यक्षविषयजाती रसत्वजातिः, तादृशजातिमत्त्वस्य परमाणुरसेऽपि विद्यमानत्वाल्लक्षण-समन्वयः। अत्र च अन्यत्राऽतिव्याप्तिविरहाद् गुणत्वपदं नोपादेयम्।

**३. घ्राणग्राह्यत्वे सति गुणत्वं गन्धस्य लक्षणम्।**

घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं गन्धस्य लक्षणमिति। घ्राणेन्द्रियजन्यप्रत्यक्ष-विषयत्वस्य गुणत्वस्य च गन्धे विद्यमानत्वाल्लक्षणसमन्वयः। गुणत्वपदानुपादाने घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वस्य गन्धत्वादावपि सत्त्वादतिव्याप्तिः। विशेषणदलानुपादाने च गुणत्वस्य रूपादावपि सत्त्वादतिव्याप्तिः। अत्रापि पूर्ववदेव परमाणुगन्धेऽव्याप्तिवारणाय घ्राणग्राह्यजातिमत्त्वमिति लक्षणं कर्तव्यम्। तथा च घ्राणग्राह्यजातिर्गन्धत्वजातिः, तादृशजातिमत्त्वस्य परमाणुगन्धेऽपि सत्त्वाल्लक्षणसमन्वयः।




Scanned by CamScanner

**४. त्वगिन्द्रियमात्रग्राह्यत्वे सति गुणत्वं स्पर्शस्य लक्षणम्।**

त्वगिन्द्रियमात्रग्राह्यत्वं नाम त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वम्। तथा च त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं स्पर्शस्य लक्षणमिति। त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वस्य त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वस्य गुणत्वस्य च स्पर्शे विद्यमानत्वाल्लक्षणसमन्वयः। अत्र त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वपदानुपादाने त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वस्य गुणत्वस्य च सङ्ख्यादिगुणे विद्यमानत्वादतिव्याप्तिः। तदुपादाने च सङ्ख्यादौ त्वग्भिन्नचक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वस्यैव सत्त्वान्नातिव्याप्तिः। गुणत्वपदानुपादाने च स्पर्शत्वादावतिव्याप्तिः। त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वपदानुपादाने च गुरुत्वादावतिव्याप्तिः। अत्रापि पूर्ववदेव परमाणुस्पर्शेऽव्याप्तिर्भवतीति त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वगिन्द्रियजन्यप्रत्यक्षविषयजातिमत्त्वे सति गुणत्वं स्पर्शस्य लक्षणमिति बोध्यम्। तथा च त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषया अथ च त्वगिन्द्रियजन्यप्रत्यक्षविषया जातिः = स्पर्शत्वजातिः, तादृशजातिमत्त्वस्य गुणत्वस्य च परमाणुस्पर्शेऽपि विद्यमानत्वाल्लक्षणसमन्वयः। अत्र गुणत्वपदानुपादाने त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वगिन्द्रियजन्यप्रत्यक्षविषया जातिः = वायुत्वजातिः, तादृशजातिमत्त्वस्य वायौ सत्त्वादतिव्याप्तिः। गुणत्वपदोपादाने च वायौ गुणत्वाभावान्नातिव्याप्तिः।

**५. एकत्वादिव्यवहाराऽसाधारणकारणत्वं सङ्ख्याया लक्षणम्।**

एकत्वादिव्यवहारः = अयमेकः, इमौ द्वौ इत्यादिशब्दप्रयोगात्मकः, तादृशव्यवहाराऽसाधारणकारणत्वस्य एकत्वादिसङ्ख्यायां विद्यमानत्वाल्लक्षणसमन्वयः। अत्र एकत्वादिव्यवहारकारणत्वमात्रकथने कालादिसाधारणकारणेऽतिव्याप्तिरतोऽसाधारणेति। ननु व्यवहारस्य शब्दात्मकत्वेन शब्दसमवायिकारणत्वस्य गगने विद्यमानत्वादतिव्याप्तिरिति चेन्न, एकत्वादिव्यवहाराऽसाधारणनिमित्तकारणत्वस्य विवक्षणात्। ननु तथापि कण्ठताल्वाद्यभिघाते एकत्वादिव्यवहाराऽसाधारणनिमित्तकारणत्वस्य विद्यमानत्वादतिव्याप्तिः। अभिघातभिन्नत्वे सतीति विशेषणस्य निवेशान्नातिव्याप्तिः।

**६. मानव्यवहाराऽसाधारणकारणत्वं परिमाणस्य लक्षणम्।**

मानव्यवहारः = अयं महान्, अयमणुः, अयं दीर्घः, अयं ह्रस्वः, इति शब्दप्रयोगात्मकः, तादृशव्यवहाराऽसाधारणकारणत्वस्य महत्त्वादिपरिमाणे विद्यमानत्वाल्लक्षणसमन्वयः। अत्रापि पूर्ववदेव कालादावतिव्याप्तिवारणायाऽसाधारणत्वम्। अन्यदपि सर्वं सङ्ख्यालक्षणवद् बोध्यम्।

**७. पृथग्व्यवहाराऽसाधारणकारणत्वं पृथक्त्वस्य लक्षणम्**

पृथग्व्यवहारः = "अयमस्मात्पृथग्" इत्यादिशब्दप्रयोगात्मकः, तादृशव्यवहाराऽसाधारणकारणत्वस्य पृथक्त्वे विद्यमानत्वाल्लक्षणसमन्वयः।

---

८. **संयुक्तव्यवहाराऽसाधारणकारणत्वं संयोगस्य लक्षणम्।**

संयुक्तव्यवहारः = "इमौ संयुक्तौ" इत्यादिशब्दप्रयोगात्मकः, तादृशव्यवहाराऽसाधारण-कारणत्वस्य संयोगे विद्यमानत्वाल्लक्षणसमन्वयः।

९. **संयोगनाशाऽसाधारणकारणत्वे सति गुणत्वं विभागस्य लक्षणम्।**

(प्रथमं क्रिया, क्रियातो विभागः, विभागात्पूर्वसंयोगनाशः, तत उत्तरदेशसंयोगः, ततः क्रियानाशः, इति क्रमः) अत्र विभागे संयोगानाशाऽसाधारणकारणत्वस्य गुणत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। गुणत्वमात्रकथने रूपादावतिव्याप्तिः। संयोगनाशाऽसाधारण-कारणत्वमात्रकथने च क्रियायामतिव्याप्तिः। संयोगनाशकारणत्वे सति गुणत्वमित्येवोक्तौ च ईश्वरेच्छादावतिव्याप्तिरतोऽसाधारणकारणत्वविवक्षणम्। ईश्वरेच्छादावसाधारणकारण-त्वाभावान्नातिव्याप्तिः।

१०. **परव्यवहाराऽसाधारणकारणत्वं परत्वस्य लक्षणम्।**

परव्यवहारः = "अयं परः" इत्यादिशब्दप्रयोगात्मकः तादृशव्यवहाराऽसाधारण-कारणत्वस्य परत्वे सत्त्वाल्लक्षणसमन्वयः।

११. **अपरव्यवहाराऽसाधारणकारणत्वमपरत्वस्य लक्षणम्।**

अपरव्यवहारः = "अयमपरः" इत्यादिशब्दप्रयोगात्मकः, तादृशव्यवहाराऽसाधारण-कारणत्वस्य अपरत्वे विद्यमानत्वाल्लक्षणसमन्वयः।

१२. **आद्यपतनाऽसमवायिकारणत्वं गुरुत्वस्य लक्षणम्।**

पतनक्रिया फलादौ वर्तते तत्रैव फलादौ विद्यमानं गुरुत्वं पतनक्रियां प्रत्यसमवायिकारणं भवतीति लक्षणसमन्वयः। द्वितीयादिपतनक्रियां प्रति वेगस्याप्यसमवायिकारणत्वेन आद्येति विशेषणम्।

१३. **आद्यस्यन्दनाऽसमवायिकारणत्वं द्रवत्वस्य लक्षणम्।**

(स्यन्दनं जलस्य गतिः) स्यन्दनं जले वर्तते, तत्रैव जले विद्यमानं द्रवत्वं स्यन्दनं प्रत्यसमवायिकारणं भवतीति लक्षणसमन्वयः। द्वितीयादिस्यन्दनं प्रति वेगस्याप्यसमवायि-कारणत्वेन आद्येति विशेषणम्।

१४. **चूर्णादिपिण्डीभावाऽसाधारणकारणत्वं स्नेहस्य लक्षणम्।**

चूर्णादिपिण्डीभावः = चूर्णादेर्धारणाऽऽकर्षणहेतुभूतः संयोगविशेषः, तस्याऽसाधारण-कारणत्वस्य जलमात्रवृत्तिस्नेहे सत्त्वाल्लक्षणसमन्वयः। पिण्डीभावसाधारणकारणत्वस्य कालादावपि वर्तमानत्वादसाधारणेति। अत्र चूर्णपदं पिष्टादिपरम्, तेन लौहादिपिण्डीभावासाधारण-

---







Scanned by CamScanner

कारणेऽग्निसंयोगे नातिव्याप्तिः। ननु चूर्णादिपिण्डीभावासाधारणकारणत्वस्य चूर्णादावपि सत्त्वात् तत्रातिव्याप्तिरिति चेन्न, चूर्णादिपिण्डीभावाऽसाधारणनिमित्तकारणत्वस्य विवक्षितत्वात्, चूर्णस्य तु समवायिकारणत्वान्नातिव्याप्तिः।

**१५. श्रोत्रग्राह्यत्वे सति गुणत्वं शब्दस्य लक्षणम्।**

श्रोत्रग्राह्यत्वं नाम श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वम्। तथा च श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्षणम्। शब्दे च श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वस्य गुणत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। गुणत्वमात्रोक्तौ रूपादावतिव्याप्तिः। श्रोत्रेन्द्रियजन्यप्रत्यक्ष-विषयत्वमात्रकथने शब्दत्वादावतिव्याप्तिः। ननु श्रोत्रबहिर्देशोत्पन्नशब्दे श्रोत्रेन्द्रियजन्यप्रत्यक्ष-विषयत्वाभावादव्याप्तिरिति चेन्न, श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयजातिमत्त्वस्य विवक्षितत्वात्। तथा च श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयजातिः = शब्दत्वजातिः, तादृशजातिमत्त्वस्य शब्दमात्रे विद्यमानत्वाल्लक्षणसमन्वयः। इदानीं शब्दत्वादावतिव्याप्तिविरहाद् गुणत्वपदं नोपादेयम्।

**१६. सर्वव्यवहाराऽसाधारणकारणत्वं बुद्धेर्लक्षणम्।**

ज्ञानं विना व्यवहारो न प्रचलति। अतः सर्वव्यवहारं प्रति ज्ञानस्य कारणत्वं भवतीति सर्वव्यवहाराऽसाधारणकारणत्वस्य बुद्धौ विद्यमानत्वाल्लक्षणसमन्वयः। सर्वव्यवहारकारणत्वस्य कालादावपि विद्यमानत्वेन तत्रातिव्याप्तिवारणायाऽसाधारणकारणत्वम्। व्यवहाराऽसाधारण-कारणत्वस्य घटादावपि विद्यमानत्वेन तत्रातिव्याप्तिवारणाय सर्वेति विशेषणम्।

**१७. सर्वेषामनुकूलवेदनीयत्वं सुखस्य लक्षणम्।**

सर्वेषाम् अनुकूलवेदनीयं = सुखं मदनुकूलमित्याकारकप्रतीतिविषयः, तादृशप्रतीति-विषयत्वस्य सुखे विद्यमानत्वाल्लक्षणसमन्वयः। अनुकूलवेदनीयत्वस्य शत्रुदुःखादावपि विद्यमानत्वेन शत्रुदुःखेऽतिव्याप्तिवारणाय सर्वेषामिति। (शिष्यबुद्धिवैशद्यार्थं सुखस्य लक्षणान्तरमप्यत्र विचार्यते)। **इतरेच्छानधीनेच्छाविषयत्वं सुखस्य लक्षणम्।** उपायेच्छां प्रति फलेच्छा कारणं भवति। यथा तृप्तीच्छा भोजनेच्छां प्रति कारणं भवति। अत्र तृप्तिर्फलं भोजनं तदुपायो वर्तते। तथैव सुखं परमं फलं विद्यते यागादिकं तदुपायो वर्तते। अतः सुखेच्छा फलेच्छा वर्तते, तदधीनाः सर्वा अन्या इच्छा (यागेच्छादयः) उपायेच्छा वर्तन्ते। किन्तु सुखेच्छा काचिदन्येच्छाधीना नास्ति। अत इतरेच्छानधीनेच्छा = सुखेच्छा, तद्विषयत्वस्य सुखे विद्यमानत्वाल्लक्षणसमन्वयः। इच्छाविषयत्वमात्रस्य घटादावपि विद्यमानत्वेन तत्राति-व्याप्तिवारणाय इतरेच्छानधीनत्वमिच्छाविशेषणम्।

**१८. सर्वेषां प्रतिकूलवेदनीयत्वं दुःखस्य लक्षणम्।**

सर्वेषां प्रतिकूलवेदनीयम् = दुःखं मत्प्रतिकूलमित्याकारकप्रतीतिविषयः, तादृशप्रतीति-

विषयत्वस्य दुःखे विद्यमानत्वाल्लक्षणसमन्वयः। प्रतिकूलवेदनीयत्वस्य शत्रुसुखेऽपि विद्यमानत्वात्तत्रातिव्याप्तिवारणाय सर्वेषामिति। (अत्रापि दुःखस्य लक्षणान्तरमपि विचार्यते) **इतरद्वेषानधीनद्वेषविषयत्वं दुःखस्य लक्षणम्।** फले द्वेषादुपाये द्वेषो जायते। यथा दुःखे द्वेषात्तदुपाये सर्पादौ द्वेषो जायते। दुःखजनके सर्पादौ यो हि द्वेषः, स दुःखद्वेषाधीनः। दुःखविषयक-द्वेषश्च नेतरविषयकद्वेषाधीनोऽत इतरद्वेषानधीनद्वेषविषयत्वस्य दुःखे विद्यमानत्वाल्लक्षणसमन्वयः। द्वेषविषयत्वमात्रस्य शत्र्वादौ विद्यमानत्वात्तत्रातिव्याप्तिवारणाय इतरद्वेषानधीनत्वं द्वेषविशेषणम्।

**१९. ज्ञानजन्यत्वे सति कृतिजनकत्वमिच्छाया लक्षणम्।**

प्रथमं वस्तुविषयकं ज्ञानं जायते, तदनन्तरं इच्छा जायते, ततश्च कृतिरुत्पद्यते इत्यश्चेच्छायां ज्ञानजन्यत्वस्य कृतिजनकत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। ज्ञानजन्य-त्वमात्रोक्तौ कृतावतिव्याप्तिः। कृतिजनकत्वमात्रोक्तौ ज्ञानेऽतिव्याप्तिरिति उभयोरुपादानम्।

**२०. (द्वेष्टीत्यनुभवसिद्ध) द्वेषत्वजातिमत्त्वं द्वेषस्य लक्षणम्।**

"अयं घटः, अयं घटः" इत्यनुगताकारप्रतीत्या यथा घटत्वजातिः प्रत्यक्षप्रमाणेन सिद्ध्यति तथैव द्वेषत्वजातिरपि द्वेष्टीत्यनुगताकारमानसप्रतीत्या प्रत्यक्षप्रमाणेन सिद्ध्यति, तादृशजातिमत्त्वस्य द्वेषे विद्यमानत्वाल्लक्षणसमन्वयः।

**२१. इच्छाजन्यत्वे सति गुणत्वं प्रत्यत्नस्य लक्षणम्।**

प्रयत्नः कृतिः सा चेच्छाजन्येति इच्छाजन्यत्वस्य गुणत्वस्य च प्रयत्ने विद्यमान-त्वाल्लक्षणसमन्वयः। गुणत्वमात्रोक्तौ रूपादावतिव्याप्तिः। इच्छाजन्यत्वमात्रोक्तौ चेष्टायामति-व्याप्तिरिति उभयोरुपादानम्।

**२२. वेदविहितकर्मजन्यत्वं धर्मस्य लक्षणम्।**

वेदविहितयागादीनामनुष्ठानेन आत्मनि धर्मस्योत्पत्तिर्जायते। स एव धर्मः सुखं प्रति कारणं भवति। अतो वेदविहितकर्मजन्यत्वस्य धर्मे सत्त्वाल्लक्षणसमन्वयः। कर्मजन्यत्वमात्रोक्तौ वेदनिषिद्धकर्मजन्येऽधर्मेऽतिव्याप्तिः। वेदविहितकर्मत्वमात्रकथने यागादिक्रियायामतिव्याप्तिः। अतो वेदविहितकर्मजन्यत्वं तल्लक्षणम्।

**२३. वेदनिषिद्धकर्मजन्यत्वमधर्मस्य लक्षणम्।**

वेदनिषिद्धब्राह्मणहननादिना आत्मन्यधर्मस्योत्पत्तिर्जायते। स एवाऽधर्मो दुःखस्य कारणं भवति। तथा च वेदनिषिद्धकर्मजन्यत्वस्याऽधर्मे सत्त्वाल्लक्षणसमन्वयः। कर्मजन्यत्वमात्रोक्तौ वेदविहितकर्मजन्ये धर्मेऽतिव्याप्तिः। वेदनिषिद्धकर्मत्वमात्रोक्तौ चौर्यादिकर्मण्यतिव्याप्तिः। अतो वेदनिषिद्धकर्मजन्यत्वं तल्लक्षणम्। इमावेव धर्माधर्मावदृष्टमिति कथ्येते, अतीन्द्रियौ च भवतः।

---

**निरस्तपादपे देशे एरण्डोऽपि द्रुमायते।**





Scanned by CamScanner

२४. **सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमत्त्वं संस्कारस्य लक्षणम्।**

संस्कारस्त्रिविधो वर्तते वेगो भावना स्थितिस्थापकश्चेति। तत्र स्थितिस्थापकवेगौ सामान्यगुणौ वर्तेते। भावना चात्मविशेषगुणो वर्तते। अर्थात् संस्कारत्वजातिः सामान्यगुणे, आत्मविशेषगुणे च वर्तते। तथा च सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिः संस्कारत्वजातिः, तादृशजातिमत्त्वस्य संस्कारे विद्यमानत्वाल्लक्षणसमन्वयः। गुणत्वव्याप्यजातिमत्त्वमात्रकथने गुणत्वव्याप्यजातिः = रूपत्वादिजातिः, तादृशजातिमत्त्वस्य रूपादौ सत्त्वादतिव्याप्तिः। सामान्यगुणात्मविशेषगुणोभयवृत्तिजातिमत्त्वमात्रोक्तौ तादृशजातिर्गुणत्वादिजातिः, तद्वत्त्वस्य रूपादौ वर्तमानत्वादतिव्याप्तिः। विशेषगुणवृत्तिगुणत्वव्याप्यजातिमत्त्वमात्रकथने तादृशजातिः रूपत्वजातिः, तद्वत्त्वस्य रूपे सत्त्वादतिव्याप्तिः। आत्मविशेषगुणवृत्तिगुणत्वव्याप्यजातिमत्त्वमात्रकथने तादृशजातिः = ज्ञानत्वजातिः, तद्वत्त्वस्य ज्ञाने सत्त्वादतिव्याप्तिः। सामान्यगुणवृत्तिगुणत्वव्याप्यजातिमत्त्वमात्रकथने तादृशजातिः संयोगत्वजातिः, तद्वत्त्वस्य संयोगे सत्त्वादतिव्याप्तिः। सामान्यगुणविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमत्त्वमात्रकथने तादृशजातिर्द्रवत्वत्वजातिः, तद्वत्त्वस्य द्रवत्वे सत्त्वादतिव्याप्तिः। अतः सर्वेषां पदानां सार्थक्यम्।

**द्वितीयादिपतनाऽसमवायिकारणत्वं वेगस्य लक्षणम्।**

द्वितीयादिपतनक्रिया फलादौ वर्तते तत्रैव समवायसम्बन्धेन वेगस्य विद्यमानत्वाद् द्वितीयादिपतनाऽसमवायिकारणत्वस्य वेगे सत्त्वाल्लक्षणसमन्वयः। आद्यपतनाऽसमवायिकारणत्वस्य गुरुत्वे सत्त्वात्तत्रातिव्याप्तिवारणाय द्वितीयादीति।

**अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम्।**

प्रथममनुभवस्तत आत्मनि भावनाख्यसंस्कारो जायते, ततः स्मृतिर्जायते। इत्थञ्च भावनायामनुभवजन्यत्वस्य स्मृतिहेतुत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। अनुभवजन्यत्वमात्रोक्तौ स्मृतावतिव्याप्तिः। स्मृतिहेतुत्वमात्रोक्तौ अनुभवेऽतिव्याप्तिः। अत उभयोः पदयोरुपादानम्।

**पृथिवीमात्रसमवेतत्वे सति संस्कारत्वव्याप्यजातिमत्त्वं स्थितिस्थापकस्य लक्षणम्।**

स्थितिस्थापकस्य पृथिवीमात्रसमवेतत्वात् तत्र पृथिवीमात्रसमवेतत्वं वर्तते, एवं संस्कारत्वव्याप्यजातिः = स्थितिस्थापकत्वजातिः तादृशजातिमत्त्वस्यापि स्थितिस्थापके सत्त्वाल्लक्षणसमन्वयः। विशेष्यदलानुक्तौ पृथिवीमात्रसमवेतत्वस्य गन्धादौ विद्यमानत्वादतिव्याप्तिः। विशेषणदलानुक्तौ च संस्कारत्वव्याप्यजातिः = भावनात्वजातिः, तद्वत्त्वस्य भावनायां सत्त्वादतिव्याप्तिः। अत उभयोरुपादानम्।

❐

**१. ऊर्ध्वदेशसंयोगहेतुत्वमुत्क्षेपणस्य लक्षणम्।**

ऊर्ध्वदेशसंयोगहेतुभूता क्रिया उत्क्षेपणपदवाच्या भवति। अत उत्क्षेपणे ऊर्ध्वदेशसंयोगहेतुत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः। ऊर्ध्वदेशसंयोगहेतुत्वस्य ऊर्ध्वदेशसंयुक्ते द्रव्येऽपि सत्त्वात् तत्रातिव्याप्तिवारणाय हेतुपदेनाऽसमवायिकारणं विवक्षितम्। तथा च ऊर्ध्वदेशसंयोगाऽसमवायिकारणत्वमुत्क्षेपणस्य लक्षणमिति फलितम्। तथा च ऊर्ध्वदेशसंयुक्ते द्रव्ये ऊर्ध्वदेशसंयोगाऽसमवायिकारणत्वस्य विरहान्नातिव्याप्तिः।

**२. अधोदेशसंयोगहेतुत्वमपक्षेपणस्य लक्षणम्।**

अधोदेशसंयोगहेतुभूता क्रिया अपक्षेपणपदवाच्या भवति। अतोऽपक्षेपणेऽधोदेशसंयोगहेतुत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः। अधोदेशसंयोगहेतुत्वस्याऽधोदेशसंयुक्ते द्रव्येऽपि सत्त्वात् तत्रातिव्याप्तिवारणाय हेतुपदेनाऽसमवायिकारणं विवक्षितम्। तथा च अधोदेशसंयोगाऽसमवायिकारणत्वमपक्षेपणस्य लक्षणमिति फलितम्। तथा चाधोदेशसंयुक्ते द्रव्येऽधोदेशसंयोगाऽसमवायिकारणत्वस्य विरहान्नातिव्याप्तिः।

**३. शरीरसन्निकृष्टसंयोगहेतुत्वमाकुञ्चनस्य लक्षणम्।**

आकुञ्चनक्रियायां शरीरसन्निकृष्टसंयोगहेतुत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः। अत्रापि पूर्ववदेव शरीरसन्निकृष्टसंयोगाऽसमवायिकारणत्वं लक्षणं बोध्यम्।

**४. शरीरविप्रकृष्टसंयोगहेतुत्वं प्रसारणस्य लक्षणम्।**

अत्रापि हेतुपदेनाऽसमवायिकारणं विवक्षितम्। तथा च शरीरविप्रकृष्टसंयोगाऽसमवायिकारणत्वस्य प्रसारणक्रियायां विद्यमानत्वाल्लक्षणसमन्वयः।

**५. उत्क्षेपणादिभिन्नत्वे सति कर्मत्वं गमनस्य लक्षणम्।**

उत्क्षेपणादिभिन्नाः सर्वाः क्रिया गमनपदवाच्या भवन्ति। अतो गमनक्रियायाम् उत्क्षेपणादिभिन्नत्वस्य कर्मत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः।

❒


Scanned by CamScanner

**१. विनाशित्वे सति अभावत्वं प्रागभावस्य लक्षणम्**

प्रागभावे विनाशित्वस्य अभावत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। विनाशित्व-मात्रकथने घटादावतिव्याप्तिः। अभावत्वमात्रकथनेऽत्यन्ताभावादावतिव्याप्तिरत उभयोरुपादानम्।

**२. उत्पत्तिमत्त्वे सति अभावत्वं प्रध्वंसाभावस्य लक्षणम्।**

प्रध्वंसाभावे उत्पत्तिमत्त्वस्य अभावत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। उत्पत्तिमत्त्व-मात्रकथने घटादावतिव्याप्तिः। अभावत्वमात्रोक्तौ प्रागभावादावतिव्यातिरत उभयोरुपादानम्।

**३. तादात्म्याऽतिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमत्यन्ताभावस्य लक्षणम्।**

ध्वंसप्रागभावयोः प्रतियोगिता किञ्चित्सम्बन्धावच्छिन्ना न भवति। अन्योन्याभावीय-प्रतियोगिता तादात्म्यसम्बन्धावच्छिन्नैव भवति। अत्यन्ताभावीयप्रतियोगिता च तादात्म्या-ऽतिरिक्तसम्बन्धावच्छिन्ना भवति। तथा च तादात्म्याऽतिरिक्तसम्बन्धावच्छिन्नप्रतियोगिता-काभावत्वस्याऽत्यन्ताभावे विद्यमानत्वाल्लक्षणसमन्वयः।

**४. तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावस्य लक्षणम्।**

अन्योन्याभावीयप्रतियोगिता तादात्म्यसम्बन्धावच्छिन्नैव भवति। तथा च तादात्म्य-सम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्य अन्योन्याभावे विद्यमानत्वाल्लक्षणसमन्वयः।


Scanned by CamScanner

# लक्षणसमन्वयप्रकरणम्

## (खण्ड-ख)

**१. अधीतव्याकरणकाव्यकोषत्वे सति अनधीतन्यायशास्त्रत्वं बालस्य लक्षणम्।**

न्यायशास्त्राध्ययने व्याकरणकाव्यकोषानां सामान्याध्ययनस्यावश्यकत्वेन लक्ष्यीभूतो बाल: अधीतव्याकरणकाव्यकोषो वर्ततेऽतो बालेऽधीतव्याकरणकाव्यकोषत्वं विद्यते। एवञ्च बालकेन न्यायशास्त्रं नाधीतमिति बालोऽनधीतन्यायशास्त्रश्च विद्यते, तस्मिन् अनधीतन्यायशास्त्रत्वं विद्यते। इत्यञ्चोभयोर्दलयोर्लक्ष्ये विद्यमानत्वेन लक्षणसमन्वय:। अत्र "अधीतव्याकरणकाव्यकोषत्वं बालस्य लक्षणम्" इत्येवोक्तौ अधीतव्याकरणकाव्यकोषत्वस्य व्यासादावपि विद्यमानत्वेन अतिव्याप्ति:। अनधीतन्यायशास्त्रत्वपदोपादाने च व्यासादौ तदभावान्नातिव्याप्ति:। "अनधीतन्यायशास्त्रत्वं बालस्य लक्षणम्" इत्येवोक्तौ च अलक्ष्यीभूते स्तनन्धयेऽतिव्याप्ति:। अधीतव्याकरणकाव्यकोषत्वपदोपादाने च स्तनन्धये तदभावान्नातिव्याप्ति:।

**२. असाधारणधर्मत्वं लक्षणस्य लक्षणम्।**

सास्नादिमत्त्वस्य गोरसाधारणधर्मत्वात् सास्नादिमत्त्वं गोर्लक्षणम्। एवं गन्धवत्त्वस्य पृथिव्या असाधारणधर्मत्वाद् गन्धवत्त्वं पृथिव्या लक्षणम्। एवमन्यत्राप्युह्यम्। असाधारणत्वञ्च लक्ष्यतावच्छेदकसमनियतत्वम्। लक्ष्यतावच्छेदकसमनियतत्वञ्च लक्ष्यतावच्छेदकव्याप्यत्वे सति लक्ष्यतावच्छेदकव्यापकत्वम्। तथा च सास्नादिमत्त्वं गोर्लक्षणमित्यत्र लक्ष्य: = गौ:, लक्ष्यतावच्छेदकं गोत्वं, तादृशगोत्वव्याप्यत्वस्य, गोत्वव्यापकत्वस्य च सास्नादिमत्त्वे विद्यमानत्वात् सास्नादिमत्त्वे लक्ष्यतावच्छेदकीभूतगोत्वसमनियतत्वं प्राप्तम्। (यत्र यत्र गोत्वं तत्र तत्र सास्नादिमत्त्वम्, यत्र यत्र सास्नादिमत्त्वं तत्र तत्र गोत्वम्।) इत्थञ्च सास्नादिमत्त्वस्य गोरसाधारणधर्मत्वात्तस्य लक्षणत्वमुपपन्नम्।

**३. लक्ष्यैकदेशाऽवृत्तित्वमव्याप्तेर्लक्षणम्**

नीलरूपवत्त्वं पृथिव्या लक्षणं कृतं चेन्नीलरूपवत्त्वलक्षणे अव्याप्तिदोषो भवति। तथाहि- लक्ष्या = पृथिवी, लक्ष्यैकदेश: = रक्तघटात्मिका पृथिवी, तत्र नीलरूपवत्त्वस्याऽवर्तमानत्वात् तदवृत्तित्वं नीलरूपवत्त्वे वर्तत इति लक्षणसमन्वय:।

---

**प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापद:।**


Scanned by CamScanner

अव्याप्तेर्निष्कृष्टलक्षणन्तु **लक्ष्यतावच्छेदकसमानाधिकरणाऽत्यन्ताभाव-प्रतियोगित्वम्।** अत्र च लक्ष्या = पृथिवी, लक्ष्यतावच्छेदकं = पृथिवीत्वम्, तदधिकरणे रक्तघटादौ नीलरूपवत्त्वाभावो वर्तते।ऽतो लक्ष्यतावच्छेदकीभूतपृथिवीत्वसमानाधिकरणात्यन्ताभावः नीलरूपवत्त्वाभावः, तत्प्रतियोगित्वस्य नीलरूपवत्त्वे विद्यमानत्वाल्लक्षणसमन्वयः।







ननु लक्षणमिदमसम्भवलक्षणलक्ष्ये ज्ञानवत्त्वेऽपि वर्तते। तथाहि – लक्ष्या = पृथिवी, लक्ष्यतावच्छेदकं पृथिवीत्वम्, तत्समानाधिकरणात्यन्ताभावः = ज्ञानवत्त्वाभावः, तत्प्रतियोगित्वं ज्ञानवत्त्वे इति। तथा चाव्याप्तिलक्षणस्य असम्भवलक्षणलक्ष्ये वर्तमानत्वादतिव्याप्तिरिति चेन्न, लक्ष्यतावच्छेदकसामानाधिकरण्यस्यापि विवक्षितत्वात्। तथा च लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेदकसमानाधिकरणाऽत्यन्ताभावप्रतियोगित्वमव्याप्तेर्लक्षणमिति। इत्थञ्च नीलरूपवत्त्वलक्षणे लक्ष्यतावच्छेदकसामानाधिकरण्यस्यापि विद्यमानत्वाल्लक्षण-समन्वयः। ज्ञानवत्त्वलक्षणे च लक्ष्यतावच्छेदकसामानाधिकरण्याभावान्नातिव्याप्तिः।

**४. लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वमतिव्याप्तेर्लक्षणम्**

रूपवत्त्वं पृथिव्या लक्षणं कृतं चेद् रूपवत्त्वलक्षणेऽतिव्याप्तिदोषो भवति। तथाहि-लक्ष्या = पृथिवी, तत्र रूपवत्त्वस्य विद्यमानत्वाल्लक्ष्यवृत्तित्वं रूपवत्त्वलक्षणे वर्तते। एवम् अलक्ष्यं जलं तत्रापि रूपवत्त्वस्य विद्यमानत्वाद् अलक्ष्यवृत्तित्वमपि रूपवत्त्वलक्षणे वर्तत इति लक्षणसमन्वयः।

अतिव्याप्तेर्निष्कृष्टलक्षणन्तु- **लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यता-वच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्।** तथाहि–अत्र लक्ष्या पृथिवी, लक्ष्यतावच्छेदकं पृथिवीत्वं, तदधिकरणे पृथिव्यां रूपवत्त्वं वर्तत इति लक्ष्यतावच्छेदक-(पृथिवीत्व)-सामानाधिकरण्यं रूपवत्त्वे वर्तते। एवञ्च लक्ष्यतावच्छेदकं पृथिवीत्वं, तादृश-पृथिवीत्वावच्छिन्नप्रतियोगिताको भेदः = "पृथिवी न" इत्याकारकप्रतीतिसिद्धः पृथिवीभेदः, तदधिकरणे जलादौ रूपवत्त्वस्य वर्तमानत्वाल्लक्ष्यतावच्छेदक-(पृथिवीत्व)-अवच्छिन्न-प्रतियोगिताकभेद- (पृथिवीभेद)- सामानाधिकरण्यमपि रूपवत्त्वे वर्तत इति अतिव्याप्तिलक्षणस्य रूपवत्त्वे विद्यमानत्वाल्लक्षणसमन्वयः।







---

हितं मनोहारि च दुर्लभं वचः।

अव्याप्तेर्निष्कृष्टलक्षणन्तु **लक्ष्यतावच्छेदकसमानाधिकरणाऽत्यन्ताभाव-प्रतियोगित्वम्।** अत्र च लक्ष्या = पृथिवी, लक्ष्यतावच्छेदकं = पृथिवीत्वम्, तदधिकरणे रक्तघटादौ नीलरूपवत्त्वाभावो वर्ततेऽतो लक्ष्यतावच्छेदकीभूतपृथिवीत्वसमानाधिकरणात्यन्ताभावः नीलरूपवत्त्वाभावः, तत्प्रतियोगित्वस्य नीलरूपवत्त्वे विद्यमानत्वाल्लक्षणसमन्वयः।







ननु लक्षणमिदमसम्भवलक्षणलक्ष्ये ज्ञानवत्त्वेऽपि वर्तते। तथाहि – लक्ष्या = पृथिवी, लक्ष्यतावच्छेदकं पृथिवीत्वम्, तत्समानाधिकरणात्यन्ताभावः = ज्ञानवत्त्वाभावः, तत्प्रतियोगित्वं ज्ञानवत्त्वे इति। तथा चाव्याप्तिलक्षणस्य असम्भवलक्षणलक्ष्ये वर्तमानत्वादतिव्याप्तिरिति चेन्न, लक्ष्यतावच्छेदकसामानाधिकरण्यस्यापि विवक्षितत्वात्। तथा च लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेदकसमानाधिकरणाऽत्यन्ताभावप्रतियोगित्वमव्याप्तेर्लक्षणमिति। इत्थञ्च नीलरूपवत्त्वलक्षणे लक्ष्यतावच्छेदकसामानाधिकरण्यस्यापि विद्यमानत्वाल्लक्षण-समन्वयः। ज्ञानवत्त्वलक्षणे च लक्ष्यतावच्छेदकसामानाधिकरण्याभावान्नातिव्याप्तिः।

**४. लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वमतिव्याप्तेर्लक्षणम्**

रूपवत्त्वं पृथिव्या लक्षणं कृतं चेद् रूपवत्त्वलक्षणेऽतिव्याप्तिदोषो भवति। तथाहि-लक्ष्या = पृथिवी, तत्र रूपवत्त्वस्य विद्यमानत्वाल्लक्ष्यवृत्तित्वं रूपवत्त्वलक्षणे वर्तते। एवम् अलक्ष्यं जलं तत्रापि रूपवत्त्वस्य विद्यमानत्वाद् अलक्ष्यवृत्तित्वमपि रूपवत्त्वलक्षणे वर्तत इति लक्षणसमन्वयः।

अतिव्याप्तेर्निष्कृष्टलक्षणन्तु- **लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यता-वच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्।** तथाहि–अत्र लक्ष्या पृथिवी, लक्ष्यतावच्छेदकं पृथिवीत्वं, तदधिकरणे पृथिव्यां रूपवत्त्वं वर्तत इति लक्ष्यतावच्छेदक-(पृथिवीत्व)-सामानाधिकरण्यं रूपवत्त्वे वर्तते। एवञ्च लक्ष्यतावच्छेदकं पृथिवीत्वं, तादृश-पृथिवीत्वावच्छिन्नप्रतियोगिताको भेदः = "पृथिवी न" इत्याकारकप्रतीतिसिद्धः पृथिवीभेदः, तदधिकरणे जलादौ रूपवत्त्वस्य वर्तमानत्वाल्लक्ष्यतावच्छेदक-(पृथिवीत्व)-अवच्छिन्न-प्रतियोगिताकभेद- (पृथिवीभेद)- सामानाधिकरण्यमपि रूपवत्त्वे वर्तत इति अतिव्याप्तिलक्षणस्य रूपवत्त्वे विद्यमानत्वाल्लक्षणसमन्वयः।






**५. लक्ष्यमात्रावृत्तित्वमसम्भवस्य लक्षणम्।**

ज्ञानवत्त्वं पृथिव्या लक्षणं कृतं चेद् ज्ञानवत्त्वलक्षणेऽसम्भवदोषो भवति। तथाहि ज्ञानवत्त्वस्य क्वापि पृथिव्यामवर्तमानत्वाल्लक्ष्यमात्राऽवृत्तित्वस्य तत्र वर्तमानत्वाल्लक्षणसमन्वयः।

असम्भवस्य निष्कृष्टलक्षणन्तु-**लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम्।** अत्र च लक्ष्या = पृथिवी, लक्ष्यतावच्छेदकं पृथिवीत्वम्, तस्य व्यापकीभूताभावः = ज्ञानवत्त्वाभावः (यत्र यत्र पृथिवीत्वं तत्र तत्र ज्ञानवत्त्वाभावः) तत्प्रतियोगित्वस्य ज्ञानवत्त्वे विद्यमानत्वाल्लक्षणसमन्वयः।

**६. ध्वंसभिन्नत्वे सति ध्वंसाऽप्रतियोगित्वं नित्यस्य लक्षणम्।**

नित्यं गगनादिकं, तच्च ध्वंसभिन्नं वर्तत इति ध्वंसभिन्नत्वं गगनादौ वर्तते। एवं "यो नश्यति स ध्वंसप्रतियोगी" इति नियमेन गगनादीनां नाशाऽसम्भवात् तत्र ध्वंसाऽप्रतियोगित्वमपि वर्तत इति लक्षणसमन्वयः। ध्वंसभिन्नत्वमात्रकथने घटादीनामपि ध्वंसभिन्नत्वात्तत्रातिव्याप्तिः। ध्वंसाऽप्रतियोगित्वकथने च घटादीनां ध्वंसप्रतियोगित्वान्नातिव्याप्तिः। ध्वंसाऽप्रतियोगित्वमात्रोक्तौ च ध्वंसस्याऽपि नाशाऽसम्भवात् तत्रापि ध्वंसाऽप्रतियोगित्वस्य विद्यमानत्वात् तस्य चाऽनित्यत्वादतिव्याप्तिः। विशेषणदलदाने च ध्वंसे ध्वंसभिन्नत्वाभावान्नातिव्याप्तिः।

**७. ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं वा अनित्यस्य लक्षणम्।**

घटादीनां ध्वंससत्त्वाद् ध्वंसप्रतियोगित्वस्य तत्र विद्यमानत्वाल्लक्षणसमन्वयः। गगनादीनां ध्वंसाऽसत्त्वात् ध्वंसप्रतियोगित्वस्य तत्र विरहान्नातिव्याप्तिः। किन्तु ध्वंसस्य ध्वंसविरहाद् ध्वंसप्रतियोगित्वस्य तत्राऽसत्त्वादव्याप्तिः। अतो लक्षणान्तरं स्वीक्रियते, प्रागभावप्रतियोगित्वमनित्यस्य लक्षणमिति। घटादीनां ध्वंसस्य च उत्पत्तिसत्त्वात् तत्र प्रागभावप्रतियोगित्वस्य विद्यमानत्वाल्लक्षणसमन्वयः। गगनादीनाञ्च उत्पत्तिविरहान्नातिव्याप्तिः। किन्तु प्रागभावस्योत्पत्तिविरहादेतल्लक्षणस्य प्रागभावेऽव्याप्तिः। अत उभयमेव लक्षणं स्वीकर्तव्यम्। प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वमिति लक्षणस्वीकारे तु प्रागभाव-प्रध्वंसाभावयोरुभयोरेव लक्षणाऽगमनादव्याप्तिः। तथा च प्रागभावप्रध्वंसाभावान्यतरप्रतियोगित्वमिति अनित्यलक्षणं पर्यवसितम्। एतल्लक्षणस्य च सर्वत्राऽनित्यपदार्थे विद्यमानत्वाल्लक्षणसमन्वयः।

**८. भोगायतनत्वं शरीरस्य लक्षणम्।**

सुखदुःखान्यतरसाक्षात्कारो भोगः, स च भोग आत्मनि जायते। किन्तु शरीराभावे आत्मनि भोगो न जायतेऽतः शरीरमात्मनो भोगस्य आयतनं (साधनं) वर्तत इति भोगायतनत्वस्य शरीरे विद्यमानत्वाल्लक्षणसमन्वयः। भोगसाधनत्वस्य इन्द्रिये विषये च वर्तमानत्वाल्लक्षणान्तरं क्रियते। **चेष्टाश्रयत्वं शरीरस्य लक्षणमिति।** चेष्टा च हिताऽहितप्राप्तिपरिहारानुकूला

---

क्रिया। हितस्य प्राप्तिः, अहितस्य च परिहारः, तदनुकूला क्रियैव चेष्टा भवति। तादृशचेष्टाश्रयत्वस्य शरीरे विद्यमानत्वाल्लक्षणसमन्वयः। ननु चेष्टाश्रयत्वस्य शरीरावयवे हस्तपादादौ वर्तमानत्वात्तत्र च शरीरपदवाच्यत्वाभावादतिव्याप्तिरिति चेन्न, शरीराऽवयवेऽपि शरीरपदवाच्यत्वमस्त्येव। अथवा अन्त्यावयवित्वं विशेषणं देयम्। तथा च **अन्त्यावयवित्वे सति चेष्टाश्रयत्वं शरीरस्य लक्षणमिति।** "योऽवयवी द्रव्यान्तरस्यावयवो न भवति स एवान्त्यावयवी कथ्यते"। हस्तादिरपि अंगुल्यादीनामवयवी वर्तते किन्तु स शरीरस्यावयवोऽपि वर्तत इति तत्र अन्त्यावयवित्वं नास्ति। शरीरन्तु न कस्यापि द्रव्यान्तरस्यावयव इति शरीरे अन्त्यावयवित्वस्य चेष्टाश्रयत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। शरीरावयवे च नातिव्याप्तिः। अन्त्यावयवित्वमात्रकथने च घटादावपि लक्षणसत्त्वादतिव्याप्तिरतश्चेष्टाश्रयत्वमपि वक्तव्यम्। घटादौ च चेष्टाश्रयत्वाभावान्नातिव्याप्तिः।

**९. शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियस्य लक्षणम्।**

(अत्रेदमवधेयम्- श्रोत्रेन्द्रिये उद्भूतविशेषगुणश्शब्दो तिष्ठति। घ्राणरसनचक्षुस्त्वक्षु रूपरसगन्धस्पर्शादयोऽनुद्भूतविशेषगुणास्तिष्ठन्ति न तूद्भूताः। मनसि च न कोऽपि विशेषगुणस्तिष्ठति।)

तथा च शब्देतरोद्भूतविशेषगुणाः = घटादौ वर्तमाना रूपरसादयः, तदनाश्रयत्वं सर्वेष्विन्द्रियेषु वर्तते। एवं ज्ञानकारणमनःसंयोगः = इन्द्रियमनःसंयोगः, तदाश्रयत्वमपि सर्वेष्विन्द्रियेषु वर्तत इति लक्षणसमन्वयः। विशेषणदलानुपादाने ज्ञानकारणमनःसंयोगाश्रयत्वस्य आत्मनि सत्त्वादतिव्याप्तिः। विशेषणदलदाने चात्मनि शब्देतरोद्भूतविशेषगुणस्य ज्ञानादेर्वर्तमानत्वान्नातिव्याप्तिः। विशेष्यदलानुपादाने च शब्देतरोद्भूतविशेषगुणानाश्रयत्वस्य कालादावपि सत्त्वादतिव्याप्तिः। तदुपादाने च कालादौ ज्ञानकारणमनःसंयोगाश्रयत्वाभावान्नातिव्याप्तिः। शब्देतरेति पदानुपादाने च श्रोत्रेन्द्रिये शब्दात्मकोद्भूतविशेषगुणानाश्रयत्वाभावादव्याप्तिः। तदुपादाने च शब्देतरोद्भूतविशेषगुणो न शब्दोऽपितु रूपादिस्तदनाश्रयत्वस्य श्रोत्रे सत्त्वान्नाव्याप्तिः। उद्भूतपदानुपादाने च शब्देतरविशेषगुणो रूपादितस्याऽश्रयत्वमेव चक्षुरादौ वर्तत इत्यव्याप्तिः। उद्भूतपदोपादाने च चक्षुरादौ ऽद्भूतरूपादीनामभावान्नाव्याप्तिः। विशेषपदानुपादाने च शब्देतरोद्भूतगुणः संयोगादिस्तदाश्रयत्वस्यैव सर्वेष्विन्द्रियेषु विद्यमानत्वादसम्भवः। तदुपादाने च संयोगादौ विशेषगुणत्वाभावात् तेषां ग्रहणाऽसम्भवान्नासम्भवः। विशेष्यदले ज्ञानकारणपदानुपादाने कालादीनां विभुतया तत्र मनःसंयोगाश्रयत्वस्य विशेषणदलस्य च सत्त्वादतिव्याप्तिः। तदुपादाने च कालमनःसंयोगे ज्ञानकारणत्वाभावान्नातिव्याप्तिः।

**१०. गन्धग्राहकत्वे सति इन्द्रियत्वं घ्राणस्य लक्षणम्।**

गन्धग्राहकत्वं नाम गन्धविषयकप्रत्यक्षजनकत्वम्। तथा च गन्धविषयकप्रत्यक्षजनकत्वे

सति इन्द्रियत्वं घ्राणस्य लक्षणम्। गन्धविषयकप्रत्यक्षम् = "अयं गन्धः" इत्याद्याकारकगन्ध-प्रत्यक्षम्, तज्जनकत्वं घ्राणेन्द्रिये विद्यते। एवं घ्राणेन्द्रिये इन्द्रियत्वमपि वर्तत इति लक्षणसमन्वयः। इन्द्रियत्वमात्रोक्तौ चक्षुरादावतिव्याप्तिः। गन्धविषयकप्रत्यक्षजनकत्वमात्रोक्तौ गन्धविषयकप्रत्यक्षे गन्धस्यापि कारणत्वेन तत्रातिव्याप्तिरिति विशेष्योपादानम्। गन्धे चेन्द्रियत्वाभावान्नातिव्याप्तिः।

**११. रसविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं रसनाया लक्षणम्।**

रसनेन्द्रिये रसविषयकप्रत्यक्षजनकत्वस्येन्द्रियत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। विशेष्यदलानुक्तौ च रसविषयकप्रत्यक्षजनकत्वस्य रसनेन्द्रिय-रससन्निकर्षेऽपि सत्त्वात् तत्रातिव्याप्तिः। इन्द्रियत्वमात्रोक्तौ च चक्षुरादावतिव्याप्तिः। अत उभयोः पदयोरुपादानम्।

**१२. रूपविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं चक्षुषो लक्षणम्।**

रूपविषयकप्रत्यक्षं प्रति चक्षुषः कारणत्वाद् रूपविषयकप्रत्यक्षजनकत्वस्येन्द्रियत्वस्य च चक्षुरिन्द्रिये विद्यमानत्वाल्लक्षणसमन्वयः। रूपविषयकप्रत्यक्षजनकत्वमात्रोक्तौ कालादीनां जन्यमात्रजनकत्वाद् रूपविषयकप्रत्यक्षजनकत्वमपि वर्तते इति कालादावतिव्याप्तिः। इन्द्रियत्वपदोपादाने च कालादौ इन्द्रियत्वाभावान्नातिव्याप्तिः। इन्द्रियत्वमात्रोक्तौ च घ्राणादावतिव्याप्तिरिति विशेषणदलोपादानम्।

**१३. स्पर्शविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं त्वचो लक्षणम्।**

स्पर्शविषयकप्रत्यक्षे त्वगिन्द्रियस्य कारणत्वात् स्पर्शविषयकप्रत्यक्षजनकत्वस्य इन्द्रियत्वस्य च त्वगिन्द्रिये विद्यमानत्वाल्लक्षणसमन्वयः। पदकृत्यं पूर्ववत्।

**१४. शब्दविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं श्रोत्रस्य लक्षणम्।**

श्रोत्रेन्द्रिये शब्दविषयकप्रत्यक्षजनकत्वस्येन्द्रियत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। पदकृत्यं पूर्ववत्।

**१५. शरीरेन्द्रियभिन्नत्वे सति उपभोगसाधनत्वं विषयस्य लक्षणम्।**

घटपटादिविषयेषु शरीरेन्द्रियभिन्नत्वस्य उपभोगसाधनत्वस्य च विद्यमानत्वाल्लक्षण-समन्वयः। शरीरेन्द्रियभिन्नत्वमात्रोक्तौ परमाण्वादावतिव्याप्तिः। उपभोगसाधनत्वकथने च परमाण्वादावुपभोगसाधनत्वाभावान्नातिव्याप्तिः। उपभोगसाधनत्वमात्रोक्तौ च शरीरादावति-व्याप्तिरिति विशेषणदलोपादानम्।

**१६. शरीरान्तःवृत्तित्वे सति सञ्चारित्वे सति वायुत्वं प्राणस्य लक्षणम्।**

प्राणवायौ शरीरान्तःवृत्तित्वस्य सञ्चारित्वस्य वायुत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। वायुत्वपदानुपादाने शरीरान्तःवृत्तित्वस्य सञ्चारित्वस्य च मनसि विद्यमानत्वादतिव्याप्तिः।

---

**यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः।**

वायुत्वपदोपादाने च मनसि वायुत्वाभावान्नातिव्याप्तिः। शरीरान्तःवृत्तित्वपदानुपादाने महावायौ सञ्चारित्वस्य वायुत्वस्य च विद्यमानत्वादतिव्याप्तिः। सञ्चारित्वपदानुपादाने च धनञ्जयवायौ शरीरान्तःवृत्तित्वस्य वायुत्वस्य च विद्यमानत्वादतिव्याप्तिः, तदुपादाने च धनञ्जयवायौ सञ्चारित्वाभावान्नातिव्याप्तिः।

## १७. बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं भूतस्य लक्षणम्।

बहिरिन्द्रियग्राह्यत्वं नाम बहिरिन्द्रियजन्यप्रत्यक्षविषयत्वम्। तथा च बहिरिन्द्रियजन्यप्रत्यक्षविषयविशेषगुणवत्त्वं भूतस्य लक्षणमिति। मनोभिन्नेन्द्रियं बहिरिन्द्रियम्। बहिरिन्द्रियजन्यप्रत्यक्षविषयविशेषगुणाः = रूपरसगन्धस्पर्शशब्दसांसिद्धिकद्रवत्वस्नेहाः, तद्वत्त्वं पृथिवीजलतेजोवाय्वाकाशेषु पञ्चसु विद्यत इति लक्षणसमन्वयः। विशेषगुणवत्त्वमात्रोक्तौ आत्मनि ज्ञानादिविशेषगुणानां सत्त्वेन तत्रातिव्याप्तिः। ननु परमाणुगुणस्य प्रत्यक्षत्वाभावात् परमाणौ बहिरिन्द्रियजन्यप्रत्यक्षविषयविशेषगुणवत्त्वाभावादव्याप्तिरिति चेन्न, बहिरिन्द्रियजन्यप्रत्यक्षविषयजातिमद्विशेषगुणवत्त्वस्य विवक्षितत्वात्। तथा च बहिरिन्द्रियजन्यप्रत्यक्षविषयजातिः = रूपत्वादिजातिः, तादृशजातिमद्विशेषगुणः = रूपम्, तद्वत्त्वस्य परमाणावपि विद्यमानत्वान्नाव्याप्तिः। अत्र लक्षणे विशेषपदानुपादाने बहिरिन्द्रियजन्यप्रत्यक्षविषयजातिः = संयोगत्वादिजातिः, तादृशजातिमद्गुणः = संयोगः, तद्वत्त्वस्य कालादावपि सत्त्वादतिव्याप्तिः। विशेषपदोपादाने च कालादौ तादृशविशेषगुणवत्त्वाभावान्नातिव्याप्तिः। लाघवानुरोधेन भूतस्य लक्षणान्तरमपि क्रियते– **आत्माऽवृत्तिविशेषगुणवत्त्वं भूतस्य लक्षणमिति।** विशेषगुणा आत्मनि भूतेषु च तिष्ठन्ति। तत्रात्मन्यवर्तमाना विशेषगुणा भूतेषु तिष्ठन्तीति आत्माऽवृत्तिविशेषगुणवत्त्वस्य भूतेषु विद्यमानत्वाल्लक्षणसमन्वयः।

## १८. क्रियाश्रयत्वं मूर्तस्य लक्षणम्।

पृथिव्यप्तेजोवायुमनांसि मूर्तपदवाच्यानि। एषु च पञ्चसु क्रियाया विद्यमानत्वाल्लक्षणसमन्वयः। ननु उत्पत्तिक्षणावच्छिन्ने पृथिव्यादौ क्रियाविरहादव्याप्तिरिति चेन्न, क्रियासमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। तथा च क्रियासमानाधिकरणद्रव्यत्वव्याप्यजातयः = पृथिवीत्वजलत्वतेजस्त्ववायुत्वमनस्त्वजातयः, तद्वत्त्वस्य सर्वेषु मूर्तेषु विद्यमानत्वाल्लक्षणसमन्वयः।

## १९. सर्वमूर्तद्रव्यसंयोगित्वं विभोः लक्षणम्।

सर्वमूर्तद्रव्याणि = सर्वाःपृथिव्यः, सर्वाणि जलानि, सर्वाणि तेजांसि, सर्वे वायवः, सर्वाणि मनांसि, तत्संयोगित्वमाकाशकालात्मदिक्षु वर्तत इति तेषां विभुत्वाल्लक्षणसमन्वयः।

---

**२०. प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम्।**

य उत्पद्यते स प्रागभावप्रतियोगी भवति। तथा च घटादीनामुत्पत्तिसत्त्वात् तेषु प्रागभावप्रतियोगित्वस्य विद्यमानत्वाल्लक्षणसमन्वयः। गगनादीनाञ्चोत्पत्त्यभावात् तेषु प्रागभावप्रतियोगित्वविरहान्नातिव्याप्तिः। अभावप्रतियोगित्वं कार्यस्य लक्षणमित्येवोक्तौ "गगनं न घटः" इत्याकारकप्रतीतिसिद्धान्योन्याभावप्रतियोगित्वस्य गगनेऽपि सत्त्वादतिव्याप्तिः। प्रागभावप्रतियोगित्वकथने च गगनादौ तदभावान्नातिव्याप्तिः।

**२१. अन्यथासिद्धभिन्नत्वे सति कार्यपूर्ववृत्तित्वं कारणस्य लक्षणम्।**

कार्यपूर्ववृत्तित्वञ्चात्र कार्याव्यवहितपूर्वक्षणवृत्तित्वम्। अन्यथासिद्धश्च अवश्यक्लृप्तनियतपूर्ववर्तिभिरेव कार्यसम्भवे तद्भिन्नः। तथा चान्यथासिद्धभिन्नत्वे सति कार्याव्यवहितपूर्वक्षणवृत्तित्वं कारणस्य लक्षणमिति। घटकारणीभूतकपालादौ अन्यथासिद्धभिन्नत्वस्य कार्याव्यवहितपूर्वक्षणवृत्तित्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। कार्याव्यवहितपूर्वक्षणवृत्तित्वमात्रकथने रासभादीनामपि कदाचिद् घटाव्यवहितपूर्वक्षणवृत्तित्वसम्भवेन तत्रातिव्याप्तिवारणाय विशेषणदलम्। ननु कार्यनियतपूर्ववृत्तित्वविवक्षणेनैव अनियतरासभादावतिव्याप्तिवारणसम्भवेऽन्यथासिद्धभिन्नत्वविशेषणोपादानं निरर्थकमिति चेन्न, तथा सति रासभादावतिव्याप्तिवारणसम्भवेऽपि घटनियतपूर्ववृत्तिदण्डत्वदण्डरूपादावतिव्याप्तिवारणाऽसम्भवोऽतस्तदुपादेयमेव। तथा च दण्डत्वदण्डरूपादीनामन्यथासिद्धत्वान्न तत्रातिव्याप्तिः।

**२२. व्यापारजनकत्वे सति असाधारणकारणत्वं करणस्य लक्षणम्।**

घटात्मककार्यं प्रति दण्डः करणं भ्रमिक्रिया च व्यापारो भवति। व्यापारश्च तज्जन्यत्वे सति तज्जन्यजनकः। तथा च भ्रमिक्रियाया दण्डजन्यत्वाद्, दण्डजन्यघटजनकत्वाच्च तत्र व्यापारत्वमुपपन्नम्। दण्डे च भ्रमिरूपव्यापारजनकत्वस्य असाधारणकारणत्वस्य च विद्यमानत्वात् तत्र करणत्वमुपपन्नम्। असाधारणकारणत्वमात्रोक्तौ भ्रमिक्रियायामतिव्याप्तिः। व्यापारजनकत्वमात्रोक्तौ कालादावतिव्याप्तिः। अत उभयोरुपादानम्।

**२३. यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्।**

घटात्मकं कार्यं कपाले समवायसम्बन्धेन वर्तमानं सद् उत्पद्यते तस्मात् कपालो घटस्य समवायिकारणं भवति।

**२४. कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति कारणत्वमसमवायिकारणस्य लक्षणम्।**

कार्येण घटेन सहैकस्मिन्नधिकरणे कपाले समवेतं सत् कारणं कपालसंयोगः। स

---

एव घटस्याऽसमवायिकारणं भवति। एवं घटरूपात्मककार्यस्य कारणेन घटेन सहैकस्मिन्नर्थे कपाले समवेतं सत् कारणं कपालरूपं भवति। तदेव घटरूपस्य असमवायिकारणं भवति।




२५. **समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणस्य लक्षणम्।**

घटनिमित्तकारणीभूते दण्डे समवायिकारणभिन्नत्वस्य असमवायिकारणभिन्नत्वस्य कारणत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः।

(त्रिविधकारणलक्षणानां विशेषविवेचनमस्मदीय**न्यायप्रवेशिकायां** द्रष्टव्यम्)

२६. **कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं साधारणकारणस्य लक्षणम्।**

कालेश्वरादीनि कार्यमात्रं प्रति कारणानि भवन्ति, अतस्तेषु साधारणकारणत्वं विद्यते। अत्र च कार्यत्वावच्छिन्नकार्यता = यावत्कार्यनिष्ठकार्यता, तादृशकार्यतानिरूपितकारणता = कालादिनिष्ठकारणता, तदाश्रयत्वस्य कालादौ विद्यमानत्वाल्लक्षणसमन्वयः।

२५. **कार्यत्वाऽतिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वमसाधारणकारणस्य लक्षणम्।**

घटं प्रति दण्डः कारणं भवतीति घटनिष्ठकार्यतानिरूपितकारणता दण्डे विद्यतेऽतो दण्डेऽसाधारणकारणता विद्यते। तथा चात्र कार्यत्वातिरिक्तो धर्मो घटत्वम्, तादृशघटत्वावच्छिन्न-कार्यता = घटनिष्ठकार्यता, तन्निरूपितकारणता = दण्डनिष्ठकारणता तदाश्रयत्वस्य दण्डे विद्यमानत्वाल्लक्षणसमन्वयः।

२८. **कार्यानुकूलधर्मविघटकत्वं प्रतिबन्धकस्य लक्षणम्।**

प्रतिबन्धक-(चन्द्रकान्तमणि)-सत्त्वे वह्निना दाहो न जन्यते। तत्र मणिना वह्नौ विद्यमाना दाहजनिका शक्तिर्नाश्यते इति कल्प्यते। तथा च कार्यं = दाहः, तदनुकूलो (तज्जनको) धर्मो वह्नौ विद्यमाना शक्तिः, तद्विघटको मणिः, तादृशविघटकत्वस्य मणौ विद्यमानत्वाल्लक्षणसमन्वयः। इदं लक्षणं वह्नौ दाहानुकूला शक्तिर्विद्यते मणिना शक्तिर्नाश्यत इति स्वीकर्तॄणां मते। नैयायिकानां मते तु मण्यभावस्य कारणत्वस्वीकारेणैव निर्वाहे वह्नौ दाहानुकूलशक्तेरस्वीकारेण तन्मतानुसारं लक्षणान्तरं क्रियते। **कारणीभूताभावप्रतियोगित्वं**

प्रतिबन्धकस्य लक्षणमिति। तथा चात्र दाहं प्रति मण्यभावस्य कारणत्वेन कारणीभूताभावः = मण्यभावः, तत्प्रतियोगित्वस्य मणौ विद्यमानत्वाल्लक्षणसमन्वयः।

**२९. प्रतिबन्धकसत्त्वे कार्यजनकत्वमुत्तेजकस्य लक्षणम्।**

चन्द्रकान्तमणिसत्त्वे वह्निना दाहो न जन्यते। किन्तु सूर्यकान्तमण्याऽनयने चन्द्रकान्त-मणिसत्त्वेऽपि दाहो जन्यते। तथा च प्रतिबन्धकसत्त्वे कार्यजनकत्वरूपलक्षणस्य सूर्यकान्तमणौ सत्त्वेन लक्षणसमन्वयः।

**३०. बहिरिन्द्रियाऽजन्यत्वे सति संस्कारजन्यत्वे सति ज्ञानत्वं स्मृतेर्लक्षणम्।**

प्रथममिन्द्रियार्थसन्निकर्षादिनाऽनुभवो जायते। तेनाऽनुभवेनाऽत्मनि भावनाख्यसंस्कार उत्पद्यते। स च संस्कार उद्बोधकसहकारेण स्मृतिं जनयति। स्मृतौ बहिरिन्द्रियाणां कारणत्वं न भवति। तथा च स्मृतौ बहिरिन्द्रियाऽजन्यत्वस्य, संस्कारजन्यत्वस्य, ज्ञानत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। ज्ञानत्वमात्रकथनेऽनुभवेऽतिव्याप्तिरतः संस्कारजन्यत्वविशेषणम्। अनुभवे संस्कारजन्यत्वाभावान्नातिव्याप्तिः। ननु तथापि प्रत्यभिज्ञायामतिव्याप्तिः। (तत्तेदन्तावगाहि ज्ञानं प्रत्यभिज्ञा।) यथा चैत्रेण कदाचिद् एकोऽश्वो दृष्टः। पुनस्तमेवाश्वं दृष्ट्वा "सोऽयमश्वः" इति ज्ञानं तस्य जायते। ज्ञानेऽस्मिन् तत्तायाः, इदन्तायाश्चावगाहनादिदं ज्ञानं प्रत्यभिज्ञा कथ्यते। तत्र च तत्तांशे संस्कारो हेतुः। इदन्त्वांशे बहिरिन्द्रियं हेतुः। तथा च प्रत्यभिज्ञायां संस्कारजन्यत्वस्य ज्ञानत्वस्य च विद्यमानत्वादतिव्याप्तिः। अतो बहिरिन्द्रियाऽजन्यत्वविशेषणम्। प्रत्यभिज्ञायान्तु बहिरिन्द्रियजन्यत्वस्य विद्यमानत्वान्नातिव्याप्तिः। ज्ञानत्वपदानुपादाने च ध्वंसं प्रति प्रतियोगिनः कारणत्वात् संस्कारध्वसं प्रति संस्कारस्य कारणत्वेन संस्कारध्वंसे संस्कारजन्यत्वस्य बहिरिन्द्रियाऽजन्यत्वस्य च विद्यमानत्वादतिव्याप्तिरतो ज्ञानत्वपदोपादानम्। ध्वंसे च ज्ञानत्वाभावान्नातिव्याप्तिः। संस्कारजन्यत्वपदानुपादाने तु नित्यज्ञाने बहिरिन्द्रियाऽजन्यत्वस्य ज्ञानत्वस्य च विद्यमानत्वादतिव्याप्तिः। तदुपादाने चेश्वरज्ञाने संस्कार-जन्यत्वाभावान्नातिव्याप्तिः।

**३१. स्मृतिभिन्नत्वे सति ज्ञानत्वमनुभवस्य लक्षणम्।**

ज्ञानं द्विविधं भवति स्मृतिरनुभवश्च। तथा चानुभवे स्मृतिभिन्नत्वस्य ज्ञानत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। विशेषणमात्रोपादाने स्मृतिभिन्ने घटादावतिव्याप्तिः। ज्ञानत्वमात्रोक्तौ च स्मृतावतिव्याप्तिः।

**३२. तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वं प्रमाया लक्षणम्।**

यथार्थानुभवः प्रमेति कथ्यते। पुरोवर्तिनं रजतं दृष्ट्वा इदं रजतमिति यज्ज्ञानं जायते तज्ज्ञानं प्रमा भवति। ज्ञानेऽस्मिन् रजतत्वं प्रकारः, रजतं विशेष्यम्। "तत्पदेन प्रकारीभूतो

---

धर्मो धर्तव्यः"। तथा चेदं रजतमिति ज्ञाने रजतत्ववद्रजतविशेष्यकत्वस्य रजतत्वप्रकारकत्वस्य अनुभवत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। तद्वद्विशेष्यकत्वपदानुपादाने चाऽयथार्थानुभवेऽतिव्याप्तिः। तथाहि- पुरोवर्तिशुक्तिं दृष्ट्वा इदं रजतमिति यज्ज्ञानं जायते तज्ज्ञानमयथार्थानुभवो भवति। ज्ञानेऽस्मिन् रजतत्वं प्रकारः शुक्तिर्विशेष्या वर्तते। तथा चात्र तत्पदग्राह्यरजतत्वप्रकारकत्वस्य अनुभवत्वस्य च विद्यमानत्वादतिव्याप्तिः। तद्वद्विशेष्यकत्वपदोपादाने च रजतत्ववद्रजतविशेष्यकत्वस्य ज्ञानेऽस्मिन् विरहान्नातिव्याप्तिः। तत्प्रकारकत्वपदानुपादाने रजतत्वप्रकारकशुक्तिविशेष्यकाऽयथार्थानुभवेऽतिव्याप्तिः। तथाहि- तत्प्रकारकत्वपदानुपादाने "तत्पदेन प्रकारीभूतो धर्मो धर्तव्यः" इति नियमाऽलाभेन तत्पदेन शुक्तित्वं गृह्यते। तथा च शुक्तित्ववत्शुक्तिविशेष्यकत्वस्य, अनुभवत्वस्य च विद्यमानत्वादतिव्याप्तिः। तत्प्रकारकत्वपदोपादाने च तत्पदग्राह्यरजतत्वप्रकारकत्वस्य विद्यमानत्वेऽपि रजतत्ववद्रजतविशेष्यकत्वाभावान्नातिव्याप्तिः। अनुभवत्वपदानुपादाने तु यथार्थानुभवजन्ये यथार्थस्मृतौ तद्वद्विशेष्यकत्वस्य तत्प्रकारकत्वस्य च विद्यमानत्वादतिव्याप्तिः। तदुपादाने च स्मृतावनुभवत्वाभावान्नातिव्याप्तिः। न च तथापि पुरोवर्तिनं रङ्गं रजतञ्च दृष्ट्वा इमे रजतरङ्गे इत्याकारको योऽयथार्थानुभवो जायते तत्रातिव्याप्तिः। ज्ञानेऽस्मिन् रङ्गं रजतञ्चेति द्वयं विशेष्यम्, रजतत्वं रङ्गत्वञ्चेति द्वयं प्रकारः। अत्र च रङ्गांशे रजतत्वावगाहनेन, रजतांशे च रङ्गत्वावगाहनेन भ्रमत्वम्। तथा चात्र तत्पदेन रजतत्वग्रहणे रजतत्ववद्रजतविशेष्यकत्वस्य रजतत्वप्रकारकत्वस्य अनुभवत्वस्य च विद्यमानत्वादेवं तत्पदेन रङ्गत्वग्रहणे रङ्गत्ववद्रङ्गविशेष्यकत्वस्य रङ्गत्वप्रकारकत्वस्य अनुभवत्वस्य च विद्यमानत्वादतिव्याप्तिः। तद्वारणाय लक्षणेऽस्मिन् परिष्कारः कर्तव्यः। तथा च **तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभवत्वं यथार्थानुभवस्य लक्षणम्।** तथा च तत्पदेन रजतत्वग्रहणे रजतत्ववद्रजतनिष्ठविशेष्यतानिरूपिता रजतत्वनिष्ठप्रकारता नास्ति, किन्तु रजतनिष्ठविशेष्यतानिरूपिता रङ्गत्वनिष्ठप्रकारता विद्यते। एवं तत्पदेन रङ्गत्वग्रहणे रङ्गत्ववद्रङ्गनिष्ठविशेष्यतानिरूपिता रङ्गत्वनिष्ठा प्रकारता नास्ति, किन्तु रङ्गनिष्ठविशेष्यतानिरूपिता रजतत्वनिष्ठप्रकारता विद्यते। इत्यस्त्राऽयथार्थानुभवे लक्षणाऽगमनान्नातिव्याप्तिः।

**३३. तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वं भ्रमस्य लक्षणम्।**

अयथार्थानुभवो भ्रम इति कथ्यते। पुरोवर्तिशुक्तिं दृष्ट्वा इदं रजतमिति यज्ज्ञानं जायते तद्भ्रमो भवति। ज्ञानेऽस्मिन् रजतत्वं प्रकारः शुक्तिर्विशेष्या वर्तते। तत्पदेन प्रकारीभूतो धर्मो धर्तव्यः। तथा च तत्पदग्राह्यरजतत्वाभाववत्शुक्तिविशेष्यकत्वस्य रजतत्वप्रकारकत्वस्य अनुभवत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। तदभाववद्विशेष्यकत्वपदानुपादाने इदं रजतमिति यथार्थानुभवे रजतत्वप्रकारकत्वस्य अनुभवत्वस्य च विद्यमानत्वादतिव्याप्तिः। तदुपादाने

तु तत्र रजतत्वाभाववद्विशेष्यकत्वाभावात्रातिव्याप्तिः। तत्प्रकारकत्वपदानुपादाने "तत्पदेन प्रकारीभूतो धर्मो धर्तव्यः" इति नियमाऽलाभेन इदं रजतमिति यथार्थानुभवे तत्पदेन शुक्तित्वं गृहीत्वा शुक्तित्वाभाववद्रजतविशेष्यकत्वस्य अनुभवत्वस्य च विद्यमानत्वादतिव्याप्तिः। तदुपादाने च तत्पदग्राह्यरजतत्वाभाववद्विशेष्यकत्वाभावात्रातिव्याप्तिः। पुनश्च रङ्गरजतयोः इमे रङ्गरजते इति यथार्थानुभवे तत्पदग्राह्यरजतत्वाभाववद्रङ्गविशेष्यकत्वस्य रजतत्वप्रकारकत्वस्य अनुभवत्वस्य च विद्यमानत्वादतिव्याप्तिः। इत्यत्र **तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठ-प्रकारताशाल्यनुभवत्वमयथार्थानुभवस्य लक्षणमिति परिष्करणीयम्।** तथा चोक्त-समूहालम्बनज्ञाने तत्पदग्राह्यरजतत्वाभाववद्रङ्गनिष्ठविशेष्यतानिरूपिता रजतत्वनिष्ठप्रकारता नास्ति, एवं रङ्गत्वाभाववद्रजतनिष्ठविशेष्यतानिरूपिता रङ्गत्वनिष्ठप्रकारता नास्ति। तथा च नातिव्याप्तिः।

### ३४. भ्रमभिन्नत्वे सति इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वं प्रत्यक्षप्रमाया लक्षणम्।

घटेन सह चक्षुःसन्निकर्षे जाते सति "अयं घटः" इति यज्ज्ञानं जायते तत्र भ्रमभिन्नत्वस्य इन्द्रियार्थसन्निकर्षजन्यत्वस्य ज्ञानत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। भ्रमभिन्नत्वपदानुपादाने रज्ज्वा सह चक्षुःसन्निकर्षेणोत्पन्ने "अयं सर्पः" इति ज्ञाने इन्द्रियार्थसन्निकर्षजन्यत्वस्य ज्ञानत्वस्य च विद्यमानत्वादतिव्याप्तिः। तदुपादाने च तत्र भ्रमभिन्नत्वाभावात्रातिव्याप्तिः। भ्रमभिन्नत्वे सति ज्ञानत्वमित्येवोक्तौ च अनुमित्यादावतिव्याप्तिः। इन्द्रियार्थसन्निकर्षजन्यत्व-पदोपादाने च अनुमित्यादौ तदभावात्रातिव्याप्तिः। ज्ञानत्वपदानुपादाने च इन्द्रियार्थसन्निकर्ष-ध्वंसेऽतिव्याप्तिः। तदुपादाने तु ध्वंसे ज्ञानत्वाभावात्रातिव्याप्तिः।

### ३५. परामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणम्।

पर्वते धूमदर्शनानन्तरं व्याप्तिस्मरणं जायते ततः परामर्शः ततोऽनुमितिर्जायते। तथा चानुमितौ परामर्शजन्यत्वस्य ज्ञानत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। ज्ञानत्वमात्रोक्तौ प्रत्यक्षादावतिव्याप्तिः। परामर्शजन्यत्वमात्रोक्तौ परामर्शध्वंसेऽतिव्याप्तिरत उभयोरुपादानम्। ननु "वह्निव्याप्यधूमवानयं पर्वतः" इत्याकारकपरामर्शानन्तरं जायमाने "वह्निव्याप्यधूमवानयं पर्वत इत्याकारकज्ञानवानहम्" इति परामर्शस्य प्रत्यक्षात्मकअनुव्यवसाये परामर्शजन्यत्वस्य ज्ञानत्वस्य च विद्यमानत्वादतिव्याप्तिः। तद्वारणाय हेत्वविषयकत्वविशेषणोपादानं क्रियते। तथा च हेत्वविषयकत्वे सति परामर्शजन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणमिति। परामर्शस्य हेतुविषयकतया परामर्शाऽनुव्यवसायेऽपि हेतुविषयकत्वं भवत्येव। (व्यवसाये ये विषया भवन्ति ते सर्वेऽनुव्यवसायस्यापि विषया भवन्ति।) तथा च परामर्शानुव्यवसाये परामर्शजन्यत्वस्य ज्ञानत्वस्य च विद्यमानत्वेऽपि हेत्वविषयकत्वाभावान्नातिव्याप्तिः। ननु तथापि कदाचित् कस्यचिद् "वह्निव्याप्यधूमवानयं पर्वतः" इत्याकारकपरामर्शानन्तरं "धूमवत्पर्वतो वह्निमान्"





इति हेतुविषयिण्यनुमितिर्जाता, तादृशानुमितौ हेत्वविषयकत्वाभावादव्याप्तिरिति चेत्, अनुमितेर्लक्षणान्तरं क्रियते। **व्याप्तिज्ञानकरणकत्वे सति ज्ञानत्वमनुमितेर्लक्षणमिति।** तथा चानुमितेरसाधारणकारणत्वात् परामर्शात्मकव्यापारजनकत्वाच्च व्याप्तिज्ञानेऽनुमितिकरणत्वं विद्यते। इत्यत्रानुमितौ व्याप्तिज्ञानकरणकत्वस्य ज्ञानत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः।

### ३६. सादृश्यज्ञानकरणकत्वे सति ज्ञानत्वमुपमितेर्लक्षणम्।

कश्चन पुरुषः केनचिद् "गोसदृशो गवयः" इति वाक्यं श्रुत्वा वनं गतस्तत्र गवयं दृष्ट्वा "गोसदृशोऽयम्" इत्याकारकं सादृश्यज्ञानं जायते। ततश्च "गोसदृशो गवयः" इति वाक्यार्थं स्मरति। ततश्च "अयं गवयपदवाच्यः" इति ज्ञानमुत्पद्यते तदेवोपमितिः कथ्यते। तथा चोपमितौ सादृश्यज्ञानं करणम्, अतिदेशवाक्यार्थस्मरणं व्यापारः। इत्यत्रोपमितौ सादृश्यज्ञानकरणकत्वस्य ज्ञानत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः।

### ३७. पदज्ञानकरणकत्वे सति ज्ञानत्वं शाब्दबोधस्य लक्षणम्।

'ग्रामं गच्छति' इत्यादिवाक्योच्चारणानन्तरं 'ग्राम, अम्, गम्, ति', इत्यादिपदानां ज्ञानं जायते। ततः शक्तिज्ञानसहकारेण तत्तत्पदज्ञानाधीनपदार्थोपस्थितिर्जायते। ततश्चोपस्थितपदार्थानां परस्परसंसर्गावगाहिज्ञानं जायते, तदेव शाब्दबोधः कथ्यते। तथा च शाब्दबोधे पदज्ञानं करणम्, पदज्ञानाधीनपदार्थोपस्थितिर्व्यापारः। इत्यत्र शाब्दप्रमायां पदज्ञानकरणकत्वस्य ज्ञानत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः।

### ३८. प्रमाकरणत्वं प्रमाणस्य लक्षणम्।

प्रत्यक्षानुमित्युपमितिशाब्दभेदेन चतुर्धा प्रमा भवन्ति। तत्करणानि प्रत्यक्षानुमानोपमान-शाब्दभेदेन चत्वारि भवन्ति। इमान्येव प्रमाणपदवाच्यानि। तथा च प्रत्यक्षादिप्रमाणेषु प्रमाकरण-त्वस्य विद्यमानत्वाल्लक्षणसमन्वयः।

### ३९. प्रत्यक्षप्रमाकरणत्वं प्रत्यक्षप्रमाणस्य लक्षणम्।

प्रत्यक्षप्रमायामिन्द्रियार्थसन्निकर्षो व्यापारः, इन्द्रियञ्च करणं भवति। तथा च प्रत्यक्ष-प्रमाकरणत्वादिन्द्रियाणि एव प्रत्यक्षप्रमाणपदवाच्यानि भवन्ति। इत्यत्रेन्द्रियात्मकप्रत्यक्षप्रमाणे प्रत्यक्षप्रमाकरणत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः।

### ४०. अनुमितिकरणत्वमनुमानस्य लक्षणम्।

अनुमितौ परामर्शो व्यापारः, व्याप्तिज्ञानञ्च करणं भवति। अनुमितिकरणत्वादेव व्याप्तिज्ञानमनुमानपदवाच्यं भवति। तथा चानुमानेऽनुमितिकरणत्वस्य विद्यमानत्वाल्लक्षण-समन्वयः।





Scanned by CamScanner

४१. उपमितिकरणत्वमुपमानस्य लक्षणम्।

उपमितौ अतिदेशवाक्यार्थस्मरणं व्यापारः, सादृश्यज्ञानञ्च करणं भवति। उपमितिकरणत्वादेव सादृश्यज्ञानमुपमानपदवाच्यं भवति। तथा चोपमाने उपमितिकरणत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः।

४२. शाब्दप्रमाकरणत्वं शब्दप्रमाणस्य लक्षणम्।

शाब्दबोधे पदज्ञानाधीनपदार्थोपस्थितिर्व्यापारः पदज्ञानञ्च करणं विद्यते। शाब्दबोधकरणत्वादेव पदज्ञानं शब्दप्रमाणपदवाच्यं भवति। तथा च शब्दप्रमाणे शाब्दप्रमाकरणत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः।

४३. व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वं परामर्शस्य लक्षणम्।

हेतोः पक्षेण सह सम्बन्धावगाहिज्ञानं पक्षधर्मताज्ञानं कथ्यते। एवं यस्मिन्ज्ञाने व्याप्तिः प्रकारतया भासते तद् व्याप्तिप्रकारकं ज्ञानं कथ्यते। यथा पर्वतो वह्निमान् धूमादित्यनुमानप्रयोगस्थले "वह्निव्याप्यो धूमः" इति "व्याप्तिज्ञानं "धूमवान् पर्वतः" इति च पक्षधर्मताज्ञानम्। तथा च "वह्निव्याप्यधूमवानयं पर्वतः" इति परामर्शे व्याप्तिःप्रकारतया भासते किञ्च पक्षे हेतोः सम्बन्धोऽपि भासते इति तज्ज्ञाने व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः।

४४. साहचर्यनियमो व्याप्तिः।

साहचर्यनियमो व्याप्तेः स्वरूपम्, लक्षणन्तु व्याप्यस्य। तत्र साहचर्यनियमो नाम सामानाधिकरण्यनियमः। यथा धूमो वह्निश्चैकस्मिन्नधिकरणे पर्वतादौ वर्तेते इति, धूमसामानाधिकरण्यं वह्नौ, वह्निसामानाधिकरण्यञ्च धूमे वर्तते। तत्र धूमस्य यावदधिकरणे वह्निर्वर्तते, किन्तु वह्नेर्यावदधिकरणे धूमो नास्तीति सामानाधिकरण्यनियमो धूम एव वर्तते। इत्थञ्च धूमे सामानाधिकरण्यनियमरूपव्याप्तेः वर्तमानत्वाद् भवति तस्य वह्निव्याप्यत्वम्। सामानाधिकरण्यनियमश्च साध्याभाववदवृत्तित्वादिरूपम्।

(व्याप्तिलक्षणसमन्वयप्रकारस्तु अस्मदीयन्यायप्रवेशिकायां द्रष्टव्यः।)

४५. अन्वयप्रयोज्यव्याप्तिमत्त्वे सति व्यतिरेकप्रयोज्यव्याप्तिमत्त्वमन्वयव्यतिरेकिणो लक्षणम्।

पर्वतो वह्निमान् धूमादित्यत्र धूमोऽन्वयव्यतिरेकिलिङ्गं वर्तते। तत्र "यत्र यत्र धूमस्तत्र तत्राग्निर्यथा महानसम्" इत्यन्वयव्याप्तिर्विद्यते। एवं "यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभावो यथा जलह्रदः" इति व्यतिरेकव्याप्तिरपि विद्यते। इत्थञ्च धूमेऽन्वयप्रयोज्यव्याप्तिमत्त्वस्य व्यतिरेकप्रयोज्यव्याप्तिमत्त्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः।





४६. व्यतिरेकप्रयोज्यव्याप्तिशून्यत्वे सति अन्वयप्रयोज्यव्याप्तिमत्त्वं केवलान्वयिनो लक्षणम्।

घटोऽभिधेयः प्रमेयत्वादित्यत्र प्रमेयत्वं केवलान्वयिलिङ्गं वर्तते। तत्र "यत्र यत्र प्रमेयत्वं तत्र तत्राभिधेयत्वं यथा पटः" इत्यन्वयव्याप्तिर्विद्यते। किन्तु प्रमेयत्वस्याऽभिधेयत्वस्य च सर्वत्र विद्यमानतया "यत्र यत्र अभिधेयत्वाभावस्तत्र तत्र प्रमेयत्वाभावः" इति व्यतिरेकव्याप्तिर्नास्ति। तथा च प्रमेयत्वहेतौ व्यतिरेकप्रयोज्यव्याप्तिशून्यत्वस्याऽन्वयप्रयोज्यव्याप्तिमत्त्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। अन्वयप्रयोज्यव्याप्तिमत्त्वमात्रोक्तौ अन्वयव्यतिरेकिण्यतिव्याप्तिस्तत्रान्वयप्रयोज्यव्याप्तिमत्त्वस्य सत्त्वात्। व्यतिरेकप्रयोज्यव्याप्तिशून्यत्वमात्रोक्तौ व्याप्त्यभाववत्यसद्धेतावतिव्याप्तिः। अन्वयप्रयोज्यव्याप्तिमत्त्वपदोपादाने चाऽसद्धेतावन्वयव्याप्तेरभावान्नातिव्याप्तिः।

४७. अन्वयप्रयोज्यव्याप्तिशून्यत्वे सति व्यतिरेकप्रयोज्यव्याप्तिमत्त्वं केवलव्यतिरेकिणो लक्षणम्।

पृथिवी स्वेतरभिन्ना गन्धवत्त्वादित्यत्र गन्धवत्त्वं केवलव्यतिरेकिलिङ्गं वर्तते। तत्र गन्धवत्त्वहेतुः पृथिव्यामेव वर्तते। पक्षभिन्नस्यैव दृष्टान्तत्वसम्भवाद् "यत्र यत्र गन्धवत्त्वं तत्र तत्र स्वेतरभेदः" इति अन्वयव्याप्तिर्नास्ति। किन्तु "यत्र यत्र स्वेतरभेदाभावस्तत्र तत्र गन्धवत्त्वाभावो यथा जलम्" इति व्यतिरेकव्याप्तिर्विद्यते। तथा च गन्धवत्त्वहेतावन्वयप्रयोज्यव्याप्तिशून्यत्वस्य व्यतिरेकप्रयोज्यव्याप्तिमत्त्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। व्यतिरेकप्रयोज्यव्याप्तिमत्त्वमात्रोक्तावन्वयव्यतिरेकिण्यतिव्याप्तिस्तत्रोभयव्याप्तेः सत्त्वात्। अन्वयप्रयोज्यव्याप्तिशून्यत्वमात्रोक्तौ व्याप्त्यभाववत्यसद्धेतावतिव्याप्तिः। विशेष्यदलोपादाने चासद्धेतौ व्यतिरेकप्रयोज्यव्याप्तिमत्त्वाभावान्नातिव्याप्तिः।

४८. व्याप्तिपक्षधर्मतावत्त्वं सद्धेतोर्लक्षणम्।

यस्मिन्हेतौ व्याप्तिः पक्षधर्मता च विद्येते स सद्धेतुः कथ्यते। यथा "पर्वतो वह्निमान् धूमाद्" इत्यत्र धूमहेतौ वह्निनिरूपिता व्याप्तिर्विद्यते किञ्च धूमहेतोः पर्वते विद्यमानत्वात्पक्षधर्मताऽपि विद्यत इति धूमात्मकसद्धेतौ व्याप्तिपक्षधर्मतावत्त्वस्य विद्यमानत्वाल्लक्षणसमन्वयः।

४९. व्याप्तिपक्षधर्मत्वाभाववत्त्वमसद्धेतोर्लक्षणम्।

यस्मिन्हेतौ व्याप्तिः पक्षधर्मता वा नास्ति सोऽसद्धेतुः कथ्यते। यथा पर्वतो वह्निमान् प्रमेयत्वादित्यत्र प्रमेयत्वहेतौ पक्षधर्मत्वस्य विद्यमानत्वेऽपि व्याप्तिर्नास्तीति तस्याऽसद्धेतुत्वम्। अयोगोलकं वह्निमद् धूमादित्यत्र च धूमहेतौ वह्निव्याप्तेर्विद्यमानत्वेऽपि पक्षधर्मत्वाभावात् तस्याऽसद्धेतुत्वम्।




Scanned by CamScanner

**५०. पञ्चावयववाक्यसमुदायत्वं न्यायस्य लक्षणम्।**

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः सन्ति। तेषु प्रत्येकं प्रतिज्ञादिकमवयवपदवाच्यं भवति। पञ्चानामवयववाक्यानां समुदायश्च न्यायः कथ्यते। तथा च न्याये पञ्चावयववाक्यसमुदायत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः।

**५१. प्रतिज्ञाद्यन्यतमत्वमवयवस्य लक्षणम्।**

प्रतिज्ञाद्यन्यतमत्वं नाम प्रतिज्ञादिभिन्नभिन्नत्वम्। प्रतिज्ञादिभिन्ना घटपटादयः, तद्भिन्नत्वस्य प्रतिज्ञाद्यवयवेषु विद्यमानत्वाल्लक्षणसमन्वयः।

**५२. न्यायाऽप्रयोज्यत्वे सति अनुमानत्वं स्वार्थानुमानस्य लक्षणम्।**

यदनुमानं स्वानुमितिं प्रति कारणं भवति तत् स्वार्थानुमानं कथ्यते। अत्र पञ्चावयववाक्यसमुदायरूपस्य न्यायस्य प्रयोजकत्वं नास्ति। अतः स्वार्थानुमाने न्यायाऽप्रयोज्यत्वस्य अनुमानत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः। अनुमानत्वमात्रोक्तौ परार्थानुमानेऽतिव्याप्तिः। न्यायाऽप्रयोज्यत्वमात्रोक्तौ घटादावतिव्याप्तिरत उभयोःपदयोरुपादानम्।

**५३. न्यायप्रयोज्यत्वे सति अनुमानत्वं परार्थानुमानस्य लक्षणम्।**

यदनुमानं परस्याऽनुमितिं प्रति कारणं भवति तत् परार्थानुमानं कथ्यते। पञ्चावयववाक्यश्रवणानन्तरं परार्थानुमानमुत्पद्यत इति परार्थानुमाने न्यायस्य प्रयोजकत्वं विद्यते। तथा च परार्थानुमाने न्यायप्रयोज्यत्वस्य अनुमानत्वस्य च विद्यमानत्वाल्लक्षणसमन्वयः।

**५४. सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता।**

पर्वतो वह्निमान् धूमादित्यत्र यदा सिषाधयिषा नास्ति सिद्धिश्च न विद्यते तत्र सिषाधयिषाविरहात्मकविशेषणस्य सत्त्वेऽपि सिद्धेरभावसत्त्वात् सिषाधयिषाविरहविशिष्टसिद्ध्यभावात्मकपक्षतायाः सत्त्वादनुमितिर्जायते।

**५५. अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासस्य लक्षणम्।**

हेत्वाभासज्ञानमनुमितितत्करणान्यतरं प्रतिबध्नाति। तथा च अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानं हेत्वाभासज्ञानं, तद्विषयत्वस्य हेत्वाभासे सत्त्वाल्लक्षणसमन्वयः।

(पक्षताहेत्वाभासविषयकं विशेषविवरणमस्मदीय**न्यायप्रवेशिकायां** द्रष्टव्यम्।)

**५६. यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तशाब्दबोधजनकत्वाभावः तत्पदे तत्पदवत्त्वमाकाङ्क्षा।**

घटीयं कर्मत्वमिति शाब्दबोधं प्रति अव्यवहितोत्तरत्वसम्बन्धेन घटपदवद् अम्पदमिति ज्ञानं कारणं भवति। तत्र अम्पदे घटपदप्रकारकज्ञानव्यतिरेकदशायां घटीयं कर्मत्वमित्याकारकशाब्दबोधजनकत्वाभावो वर्तत इति अम्पदे घटपदवत्त्वज्ञानमर्थाद् अव्यवहितोत्तरत्वसम्बन्धेन घटपदवदम्पदमिति यज्ज्ञानं तदेवाकाङ्क्षाज्ञानं तच्च शाब्दबोधे कारणं भवति।





**५७. बाधाभावो योग्यता।**

एकपदार्थस्याऽपरपदार्थे बाधज्ञाने सति शाब्दबोधो न जायते। यथा वह्निना सिञ्चतीत्यत्र वह्निकरणकत्वस्य सेचनपदार्थे बाधज्ञानसत्त्वान्न शाब्दबोधः। जलेन सिञ्चतीत्यत्र तु सेचनपदार्थे जलकरणकत्वस्य बाधाभावरूपयोग्यताज्ञानसत्त्वात्शाब्दबोधः।

**५८. पदानामविलम्बेनोच्चारणं सन्निधिः।**

विलम्बेनोच्चारितपदैः शाब्दबोधो न जायते। तथा च शाब्दबोधे पदानामविलम्बेनोच्चारणरूपं सन्निधिज्ञानमपि कारणं भवति।

**५९. अर्थस्मृत्यनुकूलपदपदार्थसम्बन्धत्वं शक्तेर्लक्षणम्।**

"अस्मात्पदादयमर्थो बोद्धव्यः" अथवा "इदं पदमिममर्थं बोधयतु" इत्याकारकेश्वरेच्छा शक्तिः। सा च पदपदार्थसम्बन्धरूपा, अर्थस्मरणे कारणञ्च। तथा चार्थस्मृत्यनुकूलपदपदार्थसम्बन्धत्वस्य शक्तौ विद्यमानत्वाल्लक्षणसमन्वयः।

**६०. निरूपकतासम्बन्धेन शक्तिमत्त्वं शक्तस्य लक्षणम्।**

शक्तेः पदपदार्थसम्बन्धतया सम्बन्धस्य च द्विष्ठतया शक्तिः पदे अर्थे च तिष्ठति। सा च शक्तिः पदे निरूपकतासम्बन्धेन तिष्ठति। शक्तिमत्पदमेव शक्तमित्युच्यते। तथा च शक्तपदे निरूपकतासम्बन्धेन शक्तिमत्त्वस्य विद्यमानत्वाल्लक्षणसमन्वयः।

**६१. विषयतासम्बन्धेन शक्तिमत्त्वं शक्यस्य लक्षणम्।**

शक्तेर्निरूपकं पदं भवति, किञ्च शक्तेर्विषयोऽर्थो भवति। तथा च शक्तिर्विषयतासम्बन्धेनाऽर्थे तिष्ठति। शक्तिमदर्थ एव शक्य इत्युच्यते। तथा च शक्येऽर्थे विषयतासम्बन्धेन शक्तिमत्त्वस्य विद्यमानत्वाल्लक्षणसमन्वयः।

**६२. शक्यसम्बन्धो लक्षणा।**

"गंगायां घोषः" इत्यत्र गंगापदार्थे भगीरथरथखातावच्छिन्नजलप्रवाहे घोषस्य तात्पर्यानुपपत्त्या गंगापदार्थप्रवाहसम्बन्धस्य तीरे गृहीतत्वात् गंगापदस्य तीरे लक्षणा भवति। तथा च गंगायां घोष इति वाक्यात् तीरवृत्तिर्घोष इति शाब्दबोधो जायते।

**६३. लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा जहल्लक्षणा।**

गंगायां घोष इत्यत्र गंगापदलक्ष्यतावच्छेदकीभूततीरत्वेन रूपेण तीरमात्रस्य बोधो भवतीति गंगायां घोष इत्यत्र जहल्लक्षणा।




Scanned by CamScanner

**६४. लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका लक्षणा अजहल्लक्षणा।**

काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य लक्ष्यं दध्युपघातकम्। तथा च तत्र दध्युपघातकत्वेन रूपेण शक्यस्य काकस्य, लक्ष्यस्य काकेतरस्य च बोधो जायत इति काकेभ्यो दधि रक्ष्यतामित्यत्राऽजहल्लक्षणा।

**६५. शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका लक्षणा जहदजहल्लक्षणा।**

तत्त्वमसीत्यत्र तत्पदार्थः सर्वज्ञत्वविशिष्टचैतन्यम्। त्वंपदार्थः किञ्चिज्ज्ञत्वविशिष्ट-चैतन्यम्। तत्र सर्वज्ञत्वकिञ्चिज्ज्ञत्वयोर्भेदाद् अभेदान्वयोऽनुपपन्नः। अतो जहदजहल्लक्षणया शक्यतावच्छेदकयोः सर्वज्ञत्वकिञ्चिज्ज्ञत्वयोः परित्यागेन चैतन्यमात्रस्य बोध इति तु अद्वैत-वेदान्तपक्षः। नैयायिकानान्तु तत्र तादृशान्वयानाकाङ्क्षिततया तत्पदस्य तत्सदृशे लक्षणां स्वीकृत्य अभेदान्वयः सम्पादनीयः। "सोऽयं देवदत्तः" इत्यादावपि तत्तांशस्योपलक्षणविधया भानसम्भवात् तत्र लक्षणास्वीकारोऽनावश्यक इति लक्षणेयं नैयायिकानां नाभिप्रेता इत्यवगन्तव्यम्।

**६६. एकधर्मावच्छिन्नविशेष्यतानिरूपित-भावाभावोभयनिष्ठप्रकारताशालि-ज्ञानत्वं संशयस्य लक्षणम्।**

"पर्वतो वह्निमान् न वा" इत्याकारकसंशये विशेष्यः पर्वतः, विशेष्यतावच्छेदकञ्च पर्वतत्वम्। वह्नि-वह्न्यभावौ प्रकारौ। तथा च पर्वतत्वरूप-एकधर्मावच्छिन्नविशेष्यता-निरूपितवह्नितदभावोभयनिष्ठप्रकारताशालिज्ञानत्वस्य "पर्वतो वह्निमान् न वा" इत्याकारक-संशये विद्यमानत्वाल्लक्षणसमन्वयः।

**६७. मिथ्याज्ञानत्वं विपर्ययस्य लक्षणम्।**

मिथ्याज्ञानं = विपरीतज्ञानम्। यथा शुक्तौ इदं रजतमिति ज्ञानम्। तादृशज्ञाने मिथ्याज्ञानत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः।

**६८. व्याप्यविषयकभ्रमजन्यव्यापकविषयकभ्रमत्वं तर्कस्य लक्षणम्।**

पर्वतो वह्निमान् धूमादित्यत्र पर्वते "धूमोऽस्तु वह्निर्मास्तु" इत्याकारकव्यभिचार-शङ्कायामनुमितिर्न जायते। तत्र तादृशव्यभिचारशङ्कानिवृत्त्यर्थं तर्कोऽपेक्षितः। स च पर्वते यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्याद् धूमस्य वह्निजन्यत्वादित्याकारकः। अत्र वह्न्यभावस्याऽऽरोपेण पर्वते धूमाभावस्यारोपः क्रियते। आरोपो नाम भ्रमः। तत्र वह्न्यभावो व्याप्यः, धूमाभावश्च व्यापको वर्तते। तथा चोक्ततर्के व्याप्यविषयकभ्रमजन्यव्यापकविषयकभ्रमत्वस्य विद्यमानत्वाल्लक्षणसमन्वयः। इदन्त्वत्र बोध्यम्। तर्के धर्मिज्ञानम्, आपाद्यव्यतिरेकनिश्चयः, आपाद्यव्याप्य-आपादकवत्तानिश्चयश्च कारणं भवति। तर्के आपाद्याभावेन आपादकाभावस्य सिद्धिर्भवति। तर्के प्रथमदलमापादकं द्वितीयदलञ्चापाद्यं भवति। अत्र च वह्न्यभाव आपादको





धूमाभावश्चापाद्यः। तथा च पक्षे पर्वते धूमाभावाभावेन (धूमेन) वह्न्यभावाभावस्य (वह्नेः) सिद्धिर्भवतीति ध्येयम्।

**६९. ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वमनुबन्धस्य लक्षणम्।**

सम्बन्धाधिकारिविषयप्रयोजनरूपानुबन्धचतुष्टयस्य ज्ञानमन्तरा ग्रन्थाध्ययने प्रवृत्तिर्न भवति। तथा च ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानमनुबन्धचतुष्टयज्ञानं तादृशज्ञानविषयत्वस्य अनुबन्धचतुष्टये विद्यमानत्वाल्लक्षणसमन्वयः।

**७०. तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं क्षणिकत्वम्।**

विभुविशेषगुणा ज्ञानशब्दादयः प्रथमक्षणे उत्पद्यन्ते, द्वितीयक्षणे तिष्ठन्ति, तृतीयक्षणे नश्यन्ति। तथा च तृतीयक्षणवृत्तिध्वंसः = ज्ञानादिध्वंसः, तत्प्रतियोगित्वं ज्ञानादौ वर्तत इति ज्ञानादीनां क्षणिकत्वम्।

**७१. स्वाधिकरणवृत्त्यत्यन्ताभावाऽप्रतियोगित्वं व्याप्यवृत्तित्वम्।**

स्वं = व्याप्यवृत्तित्वेनाभिमतं रूपादिकम्, स्वाधिकरणं घटः, तद्वृत्त्यत्यन्ताभावो न हि रूपाभावोऽपितु पटत्वाद्यभावः तत्प्रतियोगित्वं पटत्वेऽप्रतियोगित्वं रूप इति रूपस्य व्याप्यवृत्तित्वम्।




**७२. स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वमव्याप्यवृत्तित्वम्।**

स्वम् = अव्याप्यवृत्तित्वेनाभिमतं संयोगादिकम्, स्वाधिकरणं वृक्षः तद्वृत्त्यत्यन्ताभावः संयोगाभावः (संयोगस्य वृक्षे किञ्चिद्देशावच्छेदेन विद्यमानत्वात्तदनधिकरणदेशावच्छेदेन तस्मिन्नेव वृक्षे संयोगाभावो वर्तत एव) तत्प्रतियोगित्वं संयोग इति संयोगस्याऽव्याप्यवृत्तित्वम्।







Scanned by CamScanner

**७३. तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं तद्व्यापकत्वम्।**

धूमव्यापकत्वं वह्नौ वर्तते। तत्पदेनात्र व्याप्यत्वेनाभिमतो धूमः, तद्वान् पर्वतादिः, तन्निष्ठात्यन्ताभावो न हि वह्न्यभावोऽपितु घटाद्यभावः तत्प्रतियोगितावच्छेदकं घटत्वादिकम्, प्रतियोगितानवच्छेदको धर्मो वह्नित्वम्, तद्वत्त्वस्य वह्नौ सत्त्वाल्लक्षणसमन्वयः।




**तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं तद्व्यापकत्वम्।**

तत्पदेनाऽत्रापि व्याप्यत्वेनाभिमतो धूमः, तद्वान् पर्वतादिः, तन्निष्ठान्योन्याभावो न हि "वह्निमान् न" इत्याकारकप्रतीतिसिद्धो वह्निमद्भेदोऽपितु घटवद्भेदः, तत्प्रतियोगितावच्छेदकं घटवत्त्वं (घटः) प्रतियोगितानवच्छेदको वह्निः, तत्त्वं वह्नाविति लक्षणसमन्वयः।




**७४. तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वं तद्व्यापकतावच्छेदकत्वम्।**

धूमव्यापकतावच्छेदकत्वं वह्नित्वे वर्तते। तत्पदेनात्र धूमः, तद्वान् = पर्वतादिः, तन्निष्ठात्यन्ताभावो न हि वह्न्यभावोऽपितु घटाद्यभावः, तत्प्रतियोगितावच्छेदकत्वं घटत्वादौ, तादृशप्रतियोगितानवच्छेदकत्वं वह्नित्वे इति समन्वयः।

**७५. तदभाववदवृत्तित्वं तद्व्याप्यत्वम्।**

वह्निव्याप्यत्वं धूमे वर्तते। तत्पदेनात्र व्यापकत्वेनाभिमतो वह्निः, तदभाववान् जलह्रदः, तद्वृत्तित्वं मीनादौ, तदवृत्तित्वं धूम इति लक्षणसमन्वयः।

**इति लक्षणसमन्वयप्रकरणम्**

❒



# साधर्म्यवैधर्म्यसमन्वयप्रकरणम्

**१. ज्ञेयत्वादिकं द्रव्यादिसप्तानां साधर्म्यम्।**

ज्ञेयत्वं ज्ञानविषयता सा च सर्वत्रैवाऽस्ति। यद्यप्यस्मदीयज्ञानविषयता सर्वत्र नास्ति तथापीश्वरीयज्ञानविषयतायाः केवलान्वयित्वाद् ज्ञेयत्वं सप्तपदार्थेषु वर्तत इति समन्वयः। तथैवाभिधेयत्वप्रमेयत्वादयोऽपि बोध्याः।

**२. भावत्वं द्रव्यादिषण्णां साधर्म्यम्।**

द्रव्यादिसप्तपदार्थेषु सप्तमस्याभावत्वात् षण्णां भावत्वं स्फुटमेव।

**३ I. अनेकत्वे सति भावत्वं द्रव्यादिपञ्चानां साधर्म्यम्।**

द्रव्यादिपञ्चसु अनेकत्वस्य भावत्वस्य च विद्यमानत्वात् समन्वयः। अनेकत्वमात्रोक्तौ अभावेऽतिव्याप्तिः। भावत्वमात्रोक्तौ समवायेऽतिव्याप्तिः। ननु तथापि गगनेऽव्याप्ति-स्तत्रानेकत्वविशिष्टभावत्वविरहादिति चेन्न, अनेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वस्य तदर्थत्वात्। अनेके ये भावा घटपटादिद्रव्याणि, रूपरसादिगुणाः, उत्क्षेपणादिकर्माणि, घटत्वपटत्वादिजातयः, परमाणुगता विशेषाः, तेषु वृत्तयः = वर्तमानाः पदार्थविभाजकोपाधयो = द्रव्यत्वं, गुणत्वं, कर्मत्वं, सामान्यत्वं, विशेषत्वञ्च तादृशोपाधिमत्त्वस्य सर्वस्मिन् द्रव्ये, गुणे, कर्मणि, सामान्ये विशेषे च वर्तमानत्वात्समन्वयः। पदार्थविभाजकेत्यनुक्तौ अनेकभाववृत्त्युपाधि-र्भावत्वरूपोपाधिः, तद्वत्त्वस्य समवायेऽपि सत्त्वादतिव्याप्तिरतस्तदुपात्तम्।

**II. समवायसम्बन्धेन सम्बन्धित्वं द्रव्यादिपञ्चानां साधर्म्यम्।**

समवायसम्बन्धेन सम्बन्धित्वञ्च समवायप्रतियोगित्वसमवायानुयोगित्वान्यतरवत्त्वम्। द्रव्यगुणकर्मसु सत्ताजातिः समवायसम्बन्धेन वर्ततेऽतो द्रव्यगुणकर्मसु समवायाऽनुयोगित्वं वर्तते, जातौ तु समवायप्रतियोगित्वं वर्तते। विशेषपदार्थो नित्यद्रव्येषु समवायसम्बन्धेन वर्ततेऽतो विशेषे समवायप्रतियोगित्वं वर्तते। इत्थञ्च द्रव्यादिपञ्चसु समवायप्रतियोगित्वाऽ-नुयोगित्वान्यतरवत्त्वस्य सत्त्वात्समन्वयः। समवायाऽनुयोगित्वमात्रोक्तौ सामान्यविशेषयोस्तद-भावादव्याप्तिरतः प्रतियोगित्वपदम्। समवायप्रतियोगित्वमात्रोक्तौ च नित्यद्रव्याणां परमाण्वाकाशादीनां समवायसम्बन्धेन कुत्राप्यविद्यमानत्वेन तत्र समवायप्रतियोगित्वाभावाद-व्याप्तिः। अनुयोगित्वपदोपादाने च नित्यद्रव्येषु गुणादीनां समवायसम्बन्धेन वर्तमानत्वात्तत्र समवायाऽनुयोगित्वस्य विद्यमानत्वान्नाव्याप्तिः।




Scanned by CamScanner

**४. समवेतसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यादिचतुर्णां साधर्म्यम्।**

समवेताः = समवेतकादयस्तत्र समवेताः = पृथिव्यादिद्रव्याणि, रूपादिगुणाः, गमनादिक्रियाः, द्रव्यत्वादिजातयः, तद्वृत्तिपदार्थविभाजकोपाधिः = द्रव्यत्वं, गुणत्वं, कर्मत्वं, सामान्यत्वञ्च तद्वत्त्वस्य द्रव्यादिचतुर्षु विद्यमानत्वात्समन्वयः। समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वमात्रकथने विशेषत्वमपि तादृशोपाधिः, तद्वत्त्वस्य विशेषे सत्त्वादतिव्याप्तिः। पदार्थविभाजकोपाधौ समवेतसमवेतवृत्त्युपाधिः भावत्वं तद्वत्त्वस्य विशेषादौ सत्त्वादतिव्याप्तिरतस्तदुपादानम्।

**५. सत्तावत्त्वं द्रव्यादित्रयाणां साधर्म्यम्।**

सत्ताजातिः समवायसम्बन्धेन द्रव्यगुणकर्मसु त्रिषु वर्तत इति सत्तावत्त्वं त्रयाणां साधर्म्यम्।

**६. नित्याऽनित्योभयवृत्तिसत्ताभिन्नजातिमत्त्वं द्रव्यगुणयोः साधर्म्यम्।**

कानिचिद् द्रव्याणि गगनादीनि नित्यानि, कानिचिद् द्रव्याणि घटादीनि अनित्यानि, द्रव्यत्वञ्च तदुभयवृत्ति। केचन गुणा जलादिपरमाणुवृत्तिरूपादयो नित्याः, केचन गुणाः शब्दादयोऽनित्याः, गुणत्वञ्च तदुभयवृत्ति। कर्मत्वमनित्यमात्रवृत्ति नित्यकर्मणोरसत्त्वात्। इत्थञ्च नित्यानित्योभयवृत्तिसत्ताभिन्नजातिः = द्रव्यत्वं गुणत्वञ्च तद्वत्त्वस्य द्रव्ये गुणे च विद्यमानत्वात्समन्वयः। अत्र नित्यानित्योभयवृत्तिसत्तामादाय कर्मण्यतिव्याप्तिवारणाय सत्ताभिन्नेति विशेषणम्।

**७ I. निर्गुणत्वं गुणादिषण्णां साधर्म्यम्।**

चतुर्विंशतिर्गुणा द्रव्येष्वेव तिष्ठन्ति न तु गुणादौ, तथा च गुणादीनां निर्गुणत्वान्निर्गुणत्वं गुणादीनां साधर्म्यम्। न चोत्पन्नं द्रव्यं क्षणं निर्गुणं निष्क्रियञ्च तिष्ठतीति न्यायेन उत्पत्तिकालावच्छिन्ने घटेऽतिव्याप्तिरिति वाच्यम्। गुणवदवृत्तिधर्मवत्त्वस्य तदर्थत्वात्। तथा चोत्पत्तिकालावच्छिन्ने घटे वर्तमानं घटत्वं द्रव्यत्वादिकं वा गुणवद्वृत्ति एव, द्वितीयक्षणे तस्मिन्नेव घटे घटान्तरे वा गुणसत्त्वात्। गुणवदवृत्तिधर्मा गुणत्वादयस्तद्वत्त्वस्य गुणादिषण्णां विद्यमानत्वात्समन्वयः।

**II. निष्क्रियत्वं गुणादिषण्णां साधर्म्यम्।**

क्रिया पृथिव्यप्तेजोवायुमनस्सु पञ्चसु मूर्तद्रव्येष्वेव तिष्ठति। तथा च गुणादीनां निष्क्रियत्वान्निष्क्रियत्वं गुणादीनां साधर्म्यम्। ननु निष्क्रियत्वस्य गगनादौ उत्पत्तिकालीनघटे च विद्यमानत्वात्तत्रातिव्याप्तिरिति चेत्र, कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वस्य तदर्थत्वात्। तथा च उत्पत्तिकालावच्छिन्नघटवृत्ति गगनवृत्ति च द्रव्यत्वं कर्मवद्वृत्ति एव। कर्मवदवृत्तिपदार्थविभाजकोपाधयो गुणत्वादयस्तद्वत्त्वस्य गुणादौ सत्त्वात्समन्वयः। कर्मवदवृत्तिधर्मवत्त्वमात्रोक्तौ गगनत्वादीनामपि तादृशधर्मत्वाद् गगनादावतिव्याप्तिरतः पदार्थविभाजकोपाधीति। गगनत्वं न पदार्थविभाजकोपाधिरिति नातिव्याप्तिः।

**८. गुणवदवृत्तिभाववृत्तिपदार्थविभाजकोपाधिमत्त्वं गुणादिपञ्चानां साधर्म्यम्।**

गुणवद् = द्रव्यं, तदवृत्तिर्भाववृत्तिश्च पदार्थविभाजकोपाधिः = गुणत्वं, कर्मत्वं, सामान्यत्वं, विशेषत्वं, समवायत्वञ्च तद्वत्त्वस्य गुणादिपञ्चसु विद्यमानत्वात्समन्वयः। गुणवदवृत्ति अभावत्वमादायाभावेऽतिव्याप्तिवारणाय भाववृत्तीति। भाववृत्तिद्रव्यत्वमादाय द्रव्येऽतिव्याप्तिवारणाय गुणवदवृत्तीति।

**९. गुणवदवृत्तिसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं गुणादिचतुर्णां साधर्म्यम्।**

गुणवदवृत्तिसमवेतवृत्तिपदार्थविभाजकोपाधिः = गुणत्वं, कर्मत्वं, सामान्यत्वं, विशेषत्वं च तद्वत्त्वस्य गुणादौ सत्त्वात्समन्वयः। गुणवदवृत्तिसमवायत्वमादाय समवायेऽतिव्याप्तिवारणाय समवेतवृत्तीति। समवेतवृत्तिद्रव्यत्वमादाय द्रव्येऽतिव्याप्तिवारणाय गुणवदवृत्तीति।

**१०. अन्त्यावयविसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं गुणादित्रयाणां साधर्म्यम्।**

अन्त्यावयविद्रव्यं घटादिकं तत्समवेतानि गुणकर्मसामान्यानि तद्वृत्तिपदार्थविभाजकोपाधिः = गुणत्वं, कर्मत्वं, सामान्यत्वञ्च तद्वत्त्वस्य गुणादित्रिषु विद्यमानत्वात्समन्वयः। समवेतवृत्तिद्रव्यत्वमादाय द्रव्येऽतिव्याप्तिवारणाय अन्त्यावयवीति। अन्त्यावयविवृत्तिद्रव्यत्वस्य गुणादावभावादसम्भववारणाय समवेतेति। अन्त्यावयविवृत्तिवृत्तिद्रव्यत्वमादाय द्रव्येऽतिव्याप्तिवारणाय समवेतत्वमुक्तम्।

**११. असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं गुणकर्मणोः साधर्म्यम्।**

असमवायिकारणत्वं गुणे कर्मणि च तिष्ठति। तथा चासमवायिकारणवृत्तिसत्ताभिन्नजातिः गुणत्वं कर्मत्वञ्च तद्वत्त्वस्य गुणकर्मणोः सत्त्वात्समन्वयः। असमवायिकारणवृत्तिसत्ताजातिमादाय द्रव्येऽतिव्याप्तिवारणाय सत्ताभिन्नेति। सत्ताभिन्नद्रव्यत्वजातिमादाय द्रव्येऽतिव्याप्तिवारणाय असमवायिकारणवृत्तीति।

**१२. नित्याऽनित्योभयभावाऽवृत्तिपदार्थविभाजकोपाधिमत्त्वं कर्मादिपञ्चानां साधर्म्यम्।**

कर्मत्वादिचत्वारि न नित्यानित्योभयवृत्तीनि, अभावत्वं च न भाववृत्ति। तथा च नित्यानित्योभयभावाऽवृत्तिपदार्थविभाजकोपाधयः, कर्मत्वादिपञ्च तद्वत्त्वस्य कर्मादिपञ्चसु विद्यमानत्वात्समन्वयः।






Scanned by CamScanner

**१३. नित्याऽनित्योभयाऽवृत्तिपदार्थविभाजकोपाधिमत्त्वं कर्मादिचतुर्णां साधर्म्यम्।**

नित्याऽनित्योभयाऽवृत्तिपदार्थविभाजकोपाधि: कर्मत्वं, सामान्यत्वं, विशेषत्वं, समवायत्वञ्च तद्वत्त्वस्य कर्मादिचतुर्षु विद्यमानत्वात्समन्वयः।

**१४. नित्याऽनित्योभयाऽवृत्तिसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं कर्मादित्रयाणां साधर्म्यम्।**

नित्याऽनित्योभयाऽवृत्तिसमवेतवृत्तिपदार्थविभाजकोपाधि: कर्मत्वं, सामान्यत्वं, विशेषत्वञ्च तद्वत्त्वस्य कर्मादित्रिषु विद्यमानत्वात्समन्वयः। समवेतवृत्तिगुणत्वमादाय गुणेऽतिव्याप्तिवारणाय नित्यानित्योभयावृत्तीति। नित्याऽनित्योभयावृत्तिसमवायत्वमादाय समवायेऽतिव्याप्तिवारणाय समवेतवृत्तीति।

**१५. गुणाऽवृत्ति-अन्त्यावयविसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं कर्मसामान्ययोः साधर्म्यम्।**

गुणाऽवृत्तिरथ चान्त्यावयविसमवेतवृत्ति: पदार्थविभाजकोपाधि: कर्मत्वं सामान्यत्वञ्च तद्वत्त्वस्य कर्मसामान्ययोः सत्त्वात्समन्वयः। गुणवृत्तिगुणत्वमादाय गुणेऽतिव्याप्तिवारणाय गुणावृत्तीति। गुणावृत्तिविशेषत्वमादाय विशेषेऽतिव्याप्तिवारणाय अन्त्यावयविसमवेतवृत्तीति।

**१६ I. सामान्यानधिकरणत्वं सामान्यादिचतुर्णां साधर्म्यम्।**

सामान्यं द्रव्यगुणकर्मसु त्रिषु वर्तत इति सामान्यानधिकरणत्वस्य सामान्यादिषु सत्त्वात्समन्वयः।

**II. समवायाऽननुयोगित्वं सामान्यादिचतुर्णां साधर्म्यम्।**

सामान्यविशेषसमवायाऽभावेषु समवायसम्बन्धेन किमपि न तिष्ठति। इत्थञ्च तेषु समवायानुयोगित्वविरहात् समवायाऽननुयोगित्वं सामान्यादिचतुर्णां साधर्म्यम्।

**१७. सामान्यरहितत्वे सति भावत्वं सामान्यादित्रयाणां साधर्म्यम्।**

सामान्यविशेषसमवायेषु त्रिषु सामान्यरहितत्वस्य भावत्वस्य च विद्यमानत्वात्समन्वयः। सामान्यरहितत्वमात्रोक्तौ अभावेऽतिव्याप्तिः। भावत्वमात्रोक्तौ द्रव्यादावतिव्याप्तिरत उभयोरुपादानम्।

**१८. सामान्यरहितत्वे सति समवेतत्वं सामान्यविशेषयोः साधर्म्यम्।**

सामान्यविशेषयोः सामान्यरहितत्वस्य समवेतत्वस्य च विद्यमानत्वात्समन्वयः। द्रव्यादावतिव्याप्तिवारणाय सामान्यरहितत्वदलम्। समवायादावतिव्याप्तिवारणाय समवेतत्वमिति।





**१९. जन्यद्रव्यसमवेताऽवृत्तिपदार्थविभाजकोपाधिमत्त्वं विशेषादित्रयाणां साधर्म्यम्।**

जन्यद्रव्यसमवेतानि द्रव्यादिचत्वारि तत्राऽवृत्तिपदार्थविभाजकोपाधि: विशेषत्वं, समवायत्वमभावत्वञ्च तद्वत्त्वस्य विशेषादिषु सत्त्वात्समन्वयः। विशेषेऽव्याप्तिवारणाय-जन्यद्रव्येऽति। जन्यद्रव्याऽवृत्तिगुणत्वादिकमादाय गुणादावतिव्याप्तिवारणाय समवेतेति।

**२०. जन्यद्रव्यसमवेताऽवृत्तिभाववृत्तिपदार्थविभाजकोपाधिमत्त्वं विशेषसमवाययोः साधर्म्यम्।**

जन्यद्रव्यसमवेताऽवृत्तिभाववृत्तिपदार्थविभाजकोपाधि: विशेषत्वं समवायत्वञ्च तद्वत्त्वस्य विशेषसमवाययोः सत्त्वात्समन्वयः। भाववृत्तिद्रव्यत्वादिकमादाय द्रव्यादावतिव्याप्तिवारणाय जन्यद्रव्यसमवेताऽवृत्तीति। जन्यद्रव्यसमवेताऽवृत्त्यभावत्वमादायाऽभावेऽतिव्याप्तिवारणाय भाववृत्तीति।

**२१. समवेताऽवृत्तिपदार्थविभाजकोपाधिमत्त्वं समवायाऽभावयोः साधर्म्यम्।**

समवेताः=द्रव्यगुणकर्मसामान्यविशेषाः, तत्राऽवृत्तिपदार्थविभाजकोपाधि: समवायत्वमभावत्वञ्च तद्वत्त्वस्य समवायाभावयोः सत्त्वात्समन्वयः।

**२२. आश्रितत्वं नित्यद्रव्यभिन्नानां साधर्म्यम्।**

नित्यद्रव्यभिन्ना द्रव्यगुणादयः कुत्रचित् समवायादिसम्बन्धेन तिष्ठन्ति। अत एव आश्रितत्वं तेषां साधर्म्यम्। नित्यद्रव्याणि परमाण्वाकाशादीनि न कुत्रापि समवायादिसम्बन्धेन तिष्ठन्तीति न तेष्वतिव्याप्तिः। अत्र सर्वाधारताप्रयोजकभिन्नसम्बन्धेनाश्रितत्वं बोध्यमन्यथा नित्यानामपि कालिकसम्बन्धेन कालादौ विद्यमानत्वादतिव्याप्तिरिति।

**२३. पारिमाण्डल्यभिन्नानां कारणत्वं साधर्म्यम्।**

पारिमाण्डल्यमणुपरिमाणं तद्भिन्नानां कारणत्वं साधर्म्यमित्यर्थः। अणुपरिमाणं तु न कस्यापि कारणं भवति। ननु परिमाणं हि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवति। यथा-स्वं कपालपरिमाणं तदाश्रयः कपालस्तदारब्धद्रव्यं घटस्तत्परिमाणारम्भकं कपालपरिमाणं भवति। अर्थादवयविद्रव्यपरिमाणं प्रत्यवयवद्रव्यपरिमाणं कारणं भवति। इत्थञ्च परमाणुपरिमाणं द्व्यणुकपरिमाणं प्रति, द्व्यणुकपरिमाणं त्र्यणुकपरिमाणं प्रति कारणं भवत्येवेति कथमणुपरिमाणस्याऽकारणत्वमिति चेन्न, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमात्। अर्थात् परिमाणं स्वसमानजातीयं स्वोत्कृष्टञ्च परिमाणमेव जनयतीति। इत्थञ्च परमाणुपरिमाणस्य द्व्यणुकपरिमाणं प्रति जनकत्वे द्व्यणुकपरिमाणं परमाणुपरिमाणत उत्कृष्टं स्यादर्थादणुतरं स्यादेवं द्व्यणुकपरिमाणस्य त्र्यणुकपरिमाणं प्रति जनकत्वे त्र्यणुकपरिमाणं द्व्यणुकपरिमाणतः सजातीयमुत्कृष्टञ्च स्यादर्थादणुतरं स्याद्, महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वनियमात्।




Scanned by CamScanner

अतोऽणुपरिमाणं न कस्यापि कारणमिति कारणत्वं तद्भिन्नानां साधर्म्यमिति फलितम्। ननु तर्हि द्व्यणुकपरिमाणं त्र्यणुकपरिमाणञ्च प्रति किं कारणमिति चेत्, त्र्यणुकपरिमाणं प्रति द्व्यणुकगतत्रित्वसंख्या, द्व्यणुकपरिमाणं प्रति च परमाणुगतद्वित्वसंख्या कारणमित्यवधेयम्।

**२४. द्रव्यत्ववत्त्वं गुणवत्त्वं च क्षित्यादिनवानां साधर्म्यम्।**

द्रव्यत्वस्य क्षित्यादिनवद्रव्येषु विद्यमानत्वाद् द्रव्यत्ववत्त्वं तेषां साधर्म्यम्। एवं गुणानां द्रव्येष्वेव विद्यमानत्वाद् गुणवत्त्वं पृथिव्यादिनवानां साधर्म्यम्। यद्यपि उत्पत्तिकालावच्छिन्ने घटादौ गुणवत्त्वविरहादव्याप्तिस्तथापि गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वस्य तदर्थत्वान्न दोषः। गुणसमानाधिकरणसत्ताभिन्नद्रव्यत्वजातिमत्त्वस्य तत्र सत्त्वादिति।

**२५. परत्ववत्त्वमपरत्ववत्त्वं मूर्तत्ववत्त्वं क्रियावत्त्वं वेगवत्त्वञ्च पृथिव्यप्तेजोवायुमनसां साधर्म्यम्।**

परत्ववत्त्वादीनां पृथिव्यादिपञ्चसु विद्यमानत्वात् समन्वयः। यद्यपि परत्ववत्त्वादीनामुत्पत्तिकालावच्छेदेन घटादावविद्यमानत्वादव्याप्तिस्तथापि परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य तदर्थत्वान्न कोऽपि दोषः।

**२६. सर्वमूर्तद्रव्यसंयोगित्वं परममहत्त्वञ्च कालखात्मदिशां साधर्म्यम्।**

मूर्तद्रव्याणि पृथिव्यप्तेजोवायुमनांसि, तेषु सर्वेषु गगनादिचतुर्णां विभूनां संयोगो विद्यत इति सर्वमूर्तद्रव्यसंयोगित्वं विभुचतुष्टयानां साधर्म्यमित्यर्थः। एवञ्च परममहत्त्वपरिमाणस्य विभुचतुष्टयेषु विद्यमानत्वात् समन्वयः।

**२७. क्षित्यादिपञ्चानां भूतत्वं साधर्म्यम्।**

पृथिव्यप्तेजोवाय्वाकाशानि भूतपदवाच्यानीति भूतत्वस्य क्षित्यादिपञ्चसु विद्यमानत्वात्समन्वयः। भूतत्वञ्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्, आत्मावृत्तिविशेषगुणवत्त्वं वा, तच्च लक्षणसमन्वयप्रकरणे (पृ. सं. १९) व्याख्यातमेव।

**२८. स्पर्शवत्त्वं द्रव्यसमवायिकारणत्वञ्च क्षित्यादिचतुर्णां साधर्म्यम्।**

स्पर्शः पृथिवीजलतेजोवायुषु वर्ततेऽतः स्पर्शवत्त्वस्य तेषु विद्यमानत्वात्समन्वयः। अत्रापि उत्पत्तिकालावच्छिन्ने पृथिव्यादावव्याप्तिवारणाय स्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं विवक्षणीयम्। एवं द्रव्यसमवायिकारणानि स्वावयवा एव भवन्ति। तथा चावयवात्मकेषु पृथिव्यप्तेजोवायुषु द्रव्यसमवायिकारणत्वं विद्यते। आकाशादिपञ्चानाञ्च निरवयवित्वान्न तेषु द्रव्यसमवायिकारणत्वं विद्यते। ननु घटादीनामन्त्यावयविनामपि द्रव्यसमवायिकारणत्वविरहादव्याप्तिरिति चेन्न, द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य तदर्थत्वात्।

हीयते हि मतिस्तात! हीनैः सह समागमात्।



**२९ I. अव्याप्यवृत्तिविशेषगुणवत्त्वमाकाशात्मनां साधर्म्यम्।**

आकाशस्य विशेषगुणशशब्दः, स च शब्दो यदाकाशे विभौ भेर्यादिदेशावच्छेदेनोत्पद्यते तदा तस्मिन्नेवाकाशे शब्दशून्यदेशावच्छेदेन शब्दाभावोऽपि विद्यतेऽतः शब्दोऽव्याप्यवृत्तिः। एवमात्मविशेषगुणा ज्ञानादयः, ते च ज्ञानादयो यदात्मनि विभौ शरीरावच्छेदेनोत्पद्यन्ते तदा घटादिदेशावच्छेदेन तस्मिन्नेवात्मनि ज्ञानाद्यभावोऽपि विद्यतेऽतो ज्ञानादयोऽव्याप्यवृत्तयः। तथा चाव्याप्यवृत्तिविशेषगुणवत्त्वस्य आकाशात्मनोर्विद्यमानत्वात् समन्वयः। विशेषगुणवत्त्वमात्रोक्तौ रूपादिविशेषगुणवत्त्वस्य पृथिव्यादावपि सत्त्वेन तत्रातिव्याप्तिरतोऽव्याप्यवृत्तीति। तथा च रूपेऽव्याप्यवृत्तित्वविरहान्नातिव्याप्तिः। अव्याप्यवृत्तिगुणवत्त्वमात्रोक्तौ संयोगाद्यव्याप्यवृत्तिगुणस्य पृथिव्यादावपि सत्त्वेन तत्रातिव्याप्तिवारणाय विशेषेति। तथा च संयोगादौ विशेषगुणत्वाभावान्नातिव्याप्तिः।

**II. क्षणिकविशेषगुणवत्त्वमाकाशात्मनां साधर्म्यम्।**

आकाशस्य विशेषगुणशशब्दः प्रथमक्षण उत्पद्यते द्वितीयक्षणे तिष्ठति, तृतीयक्षणे नश्यतीति शब्दे तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपं क्षणिकत्वं विद्यते। एवमात्मविशेषगुणा ज्ञानदयोऽपि प्रथमक्षण उत्पद्यन्ते द्वितीयक्षणे तिष्ठन्ति, तृतीयक्षणे नश्यन्तीति ज्ञानादौ तादृशक्षणिकत्वं विद्यते। तथा च क्षणिकविशेषगुणवत्त्वस्य आकाशात्मनोर्विद्यमानत्वात् समन्वयः। ननु रूपादीनामपि कदाचित्तृतीयक्षणे नाशसम्भवात्तत्रापि तादृशक्षणिकत्वस्य विद्यमानत्वात् क्षणिकविशेषगुणवत्त्वस्य पृथिव्यादौ सत्त्वादतिव्याप्तिरिति चेन्न, चतुःक्षणवृत्तिजन्याऽवृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वात्। चतुःक्षणवृत्तिजन्यो रूपघटादिर्न तु शब्दज्ञानादिः, तत्राऽवृत्तिजातिः=शब्दत्वज्ञानत्वादिजातिः, तादृशजातिमद्विशेषगुणः=शब्दज्ञानादिः, तद्वत्त्वस्य आकाशात्मनोर्विद्यमानत्वात् समन्वयः। ननु त्रिक्षणत्वं विहाय कुतश्चतुःक्षणत्वपर्यन्तानुधावनमिति चेन्न,

अपेक्षाबुद्ध्यात्मकं ज्ञानं क्षणत्रयं तिष्ठति। [प्रथमम् अयमेकः, अयमेकः इत्याकारिकापेक्षाबुद्धिः। ततो द्वित्वोत्पत्तिः। ततो द्वित्वत्वनिर्विकल्पकप्रत्यक्षम्। (विशेषणज्ञानम्) ततो द्वित्वसविकल्पकप्रत्यक्षमपेक्षाबुद्धिनाशश्च। ततो द्वित्वनाशः।] तथा च त्रिक्षणवृत्तिजन्यमपेक्षाबुद्ध्यात्मकज्ञानमपि तद्वृत्तिरेव ज्ञानत्वजातिरिति आत्मनि लक्षणाऽगमनादव्याप्तिरतस्त्रिक्षणत्वं विहाय चतुःक्षणत्वपर्यन्तानुधावनम्। क्षणचतुष्टयं तु न किमपि जन्यज्ञानादिकं तिष्ठतीति चतुःक्षणवृत्तिजन्याऽवृत्तिजातिः ज्ञानत्वजातिः, तद्वद्विशेषगुणवत्त्वस्यात्मनि सत्त्वान्नाव्याप्तिः। जन्यपदानुपादाने चतुःक्षणवृत्ति नित्यज्ञानमपि तद्वृत्ति एव ज्ञानत्वमत आत्मन्यव्याप्तिः। विशेषपदानुपादाने द्वित्वसंख्याया अपि चतुर्थक्षणे नाशाभ्युपगमेन चतुःक्षणवृत्तिजन्यावृत्तिजातिर्द्वित्वत्वजातिः, तादृशजातिमद्गुणवत्त्वस्य पृथिव्यादौ सत्त्वादतिव्याप्तिरतस्तदुपादानम्।

किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी।


Scanned by CamScanner

३०. **रूपवत्त्वं द्रवत्ववत्त्वं प्रत्यक्षविषयत्वञ्च क्षित्यादित्रयाणां साधर्म्यम्।**

रूपस्य द्रवत्वस्य प्रत्यक्षविषयत्वस्य च पृथिव्यादित्रिषु विद्यमानत्वात्समन्वयः। न रूपवत्त्वस्योत्पत्तिकालावच्छिन्ने घटेऽसत्त्वादव्याप्तिः, द्रवत्वस्य घटादौ वह्न्यादौ च विरहाद व्याप्तिः, प्रत्यक्षविषयत्वस्य च परमाण्वादौ विरहादव्याप्तिरतिव्याप्तिश्च रूपादौ सत्त्वादि वाच्यम्। रूपवत्त्वस्य रूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वार्थकत्वात्। द्रवत्ववत्त्वस्य द्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वार्थकत्वात्। प्रत्यक्षविषयत्वस्य च चाक्षुषप्रत्यक्ष विषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वार्थकत्वात्।

३१. **रसवत्त्वं गुरुत्ववत्त्वञ्च पृथिवीजलयोः साधर्म्यम्।**

रसवत्त्वस्य गुरुत्ववत्त्वस्य च पृथिवीजलयोः सत्त्वात्समन्वयः।

३२. **नैमित्तिकद्रवत्ववत्त्वं पृथिवीतेजसोः साधर्म्यम्।**

पृथिव्यां घृतादौ, तेजसि च सुवर्णादौ नैमित्तिकद्रवत्वं वर्ततेऽतो नैमित्तिकद्रवत्ववत्त्वस्य पृथिवीतेजसोः सत्त्वात्समन्वयः। यद्यपि नैमित्तिकद्रवत्वं घटादौ वह्न्यादौ च नास्ति तथापि नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य तदर्थत्वान्न कोऽपि दोषः।

३३. **विशेषगुणवत्त्वमात्मभूतानां साधर्म्यम्।**

रूपादिविशेषगुणा भूतेषु तिष्ठन्ति, ज्ञानादिविशेषगुणा आत्मनि तिष्ठन्ति। कालदिङ्मनस्सु विशेषगुणा न तिष्ठन्ति। इत्थञ्च विशेषगुणवत्त्वस्य आत्मभूतेषु विद्यमानत्वात्समन्वयः।

## यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत्।

यस्य साधर्म्यं यदुक्तं तद्भिन्नानां तद् वैधर्म्यं भवति। यथा "अनेकत्वे सति भावत्वं" पञ्चानां साधर्म्यमुक्तमतः "अनेकत्वे सति भावत्वं" समवायाभावयोर्वैधर्म्यम्। सत्तावत्त्वं द्रव्यादित्रयाणां साधर्म्यं, तच्च सामान्यादीनां वैधर्म्यमित्यर्थः। ज्ञेयत्वादिकं तु न कस्यापि वैधर्म्यमित्यवधेयम्।

। **इति साधर्म्यवैधर्म्यसमन्वयप्रकरणम्** ।

❐



# शाब्दबोधप्रकरणम्

१. **रूपवान् घटः**

"रूपवान् घटः" इति वाक्ये रूपं प्रकारः (विशेषणम्) घटश्च विशेष्यो वर्तते। प्रकारे प्रकारता तिष्ठति अतो रूपे प्रकारता विद्यते। "प्रकारता यत्र विद्यते तत्र भासमानो धर्मः प्रकारताया अवच्छेदको भवति।" अत्र च प्रकारीभूते रूपे भासमानो धर्मः रूपत्वमिति रूपनिष्ठप्रकारताया अवच्छेदको धर्मो रूपत्वमस्ति। "यो धर्मो यस्यावच्छेदकः स तद्धर्मावच्छिन्नः" इति नियमेन रूपत्वावच्छिन्ना रूपनिष्ठा प्रकारता भवति। पुनश्च "येन सम्बन्धेन प्रकारीभूतो धर्मो विशेष्ये तिष्ठति स सम्बन्धः प्रकारतावच्छेदकसम्बन्धो भवति।" अत्र च रूपं घटे समवायसम्बन्धेन तिष्ठतीति रूपनिष्ठप्रकारताया अवच्छेदकसम्बन्धः समवायसम्बन्धः। पूर्वोक्तनियमानुसारं रूपनिष्ठप्रकारता समवायसम्बन्धावच्छिन्ना वर्तते। एवमेव घटनिष्ठविशेष्यताया अवच्छेदकं घटत्वं भवति। अतो घटनिष्ठविशेष्यता घटत्वावच्छिन्ना सञ्जाता। विशेष्यतायाः किञ्चित्सम्बन्धावच्छिन्नत्वाऽस्वीकारेण घटनिष्ठविशेष्यतावच्छेदक-सम्बन्धश्च न कश्चित्। एवञ्च प्रकारत्वविशेष्यतयोः परस्परं निरूप्यनिरूपकभावो भवति।







इत्थञ्च "रूपवान् घटः" इति वाक्यस्यायमर्थः -

**"समवायसम्बन्धावच्छिन्न-रूपत्वावच्छिन्न-रूपनिष्ठप्रकारता-निरूपितघटत्वावच्छिन्न-घटनिष्ठविशेष्यतावान् घटः"** इति।

२. **गन्धवती पृथिवी**

| | | |
|---|---|---|
| प्रकारः | - | गन्धः |
| प्रकारता | - | गन्धनिष्ठा |
| प्रकारतावच्छेदकम् | - | गन्धत्वम् |
| गन्धत्वावच्छिन्ना | - | प्रकारता |
| प्रकारतावच्छेदकसम्बन्धः | - | समवायः |
| समवायसम्बन्धावच्छिन्ना | - | प्रकारता |







Scanned by CamScanner

| | | |
|---|---|---|
| विशेष्या | - | पृथिवी |
| विशेष्यता | - | पृथिवीनिष्ठा |
| विशेष्यतावच्छेदकम् | - | पृथिवीत्वम् |
| पृथिवीत्वावच्छिन्ना | - | विशेष्यता |




**समवायसम्बन्धावच्छिन्न-गन्धत्वावच्छिन्न-गन्धनिष्ठप्रकारतानिरूपितपृथिवीत्वावच्छिन्नपृथिवीनिष्ठविशेष्यतावती पृथिवी।**

**३. ज्ञानवान् आत्मा**




| | | |
|---|---|---|
| प्रकार: | - | ज्ञानम् |
| प्रकारतावच्छेदकम् | - | ज्ञानत्वम् |
| प्रकारतावच्छेदकसम्बन्धः | - | समवायः |
| विशेष्यः | - | आत्मा |
| विशेष्यतावच्छेदकम् | - | आत्मत्वम् |




**समवायसम्बन्धावच्छिन्न-ज्ञानत्वावच्छिन्न-ज्ञाननिष्ठप्रकारतानिरूपित-आत्मत्वावच्छिन्न-आत्मनिष्ठविशेष्यतावान् आत्मा।**

**४. शब्दवद् गगनम्**

**समवायसम्बन्धावच्छिन्न-शब्दत्वावच्छिन्न-शब्दनिष्ठप्रकारतानिरूपित-गगनत्वावच्छिन्न-गगननिष्ठविशेष्यतावद् गगनम्।**

**५. घटवद् भूतलम्**

**संयोगसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-घटनिष्ठप्रकारता-निरूपित-भूतलत्वावच्छिन्न-भूतलनिष्ठविशेष्यतावद् भूतलम्।**





## (कार्यकारणभावमादाय शाब्दबोधः)

**१. घटं प्रति कपालः कारणम्**

अत्र घटः कार्यं कपालश्च कारणं विद्यते। एवञ्च कार्यतावच्छेदकं घटत्वं, कारणतावच्छेदकञ्च कपालत्वं वर्तते। कार्यतावच्छेदक-कारणतावच्छेदकसम्बन्धविषये किञ्चिद् विचार्यते- "ययोः सामानाधिकरण्यं तयोरेव कार्यकारणभावः" इति नियमेन कार्यकारणयोः सामानाधिकरण्यमपेक्षितं भवति।




अत्र च घटात्मकं कार्यं स्वावयवे कपाले समवायसम्बन्धेन तिष्ठति। तस्मिन्नेव कपाले कपालात्मकं कारणमपि तादात्म्यसम्बन्धेन तिष्ठति। इत्थञ्च कार्यकारणयोः सामानाधिकरण्यं वर्तते। तथा च 'एकस्मिन्नधिकरणे येन सम्बन्धेन कार्यं तिष्ठति स सम्बन्धः कार्यतावच्छेदकसम्बन्धः। एकस्मिन्नधिकरणे येन सम्बन्धेन कारणं तिष्ठति स सम्बन्धः कारणतावच्छेदकसम्बन्धः"। तथा चात्र घटनिष्ठकार्यतावच्छेदकसम्बन्धः समवायः, कपालनि᳚कारणतावच्छेदकसम्बन्धश्च तादात्म्यम्। अथ च "घटकारणं कपालः" इति वाक्यस्यायमर्थः-

**समवायसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-घटनिष्ठकार्यता-निरूपित-तादात्म्यसम्बन्धावच्छिन्न-कपालत्वावच्छिन्न-कपालनिष्ठ-कारणतावान् कपालः।**

**२. ज्ञानकारणमात्मा**




**समवायसम्बन्धावच्छिन्न-ज्ञानत्वावच्छिन्न-ज्ञाननिष्ठकार्यता-निरूपित-तादात्म्यसम्बन्धावच्छिन्न-आत्मत्वावच्छिन्न-आत्मनिष्ठ-कारणतावान् आत्मा।**

❒




Scanned by CamScanner

## (अभावविषयकशाब्दबोधः)

**१. घटाभावः (संयोगेन घटो नास्ति इत्याकारकप्रतीतिसिद्धाभावः)**

"यस्याभावः स प्रतियोगी" इति नियमेन "घटाभावः" इत्यत्र घटः प्रतियोगी, प्रतियोगिता घटनिष्ठा, प्रतियोगितावच्छेदकं घटत्वं भवति। "येन सम्बन्धेन यत्रास्तीत्युच्यते स सम्बन्धः प्रतियोगितावच्छेदकसम्बन्धः" इति नियमेन अत्र घटनिष्ठप्रतियोगितावच्छेदक-सम्बन्धः संयोगसम्बन्धो वर्तते। प्रतियोगिताया निरूपकश्च अभावो भवति। तथा च "संयोग-सम्बन्धेन घटो नास्ति" इति वाक्यस्यायमर्थः-

**संयोगसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-घटनिष्ठ-प्रतियोगिता-निरूपकाभावः।**

**२. रूपाभावः (समवायेन रूपं नास्ति इत्याकारकप्रतीतिसिद्धाभावः)**

| | | |
|---|---|---|
| प्रतियोगि | - | रूपम् |
| प्रतियोगितावच्छेदकम् | - | रूपत्वम् |
| प्रतियोगितावच्छेदकसम्बन्धः | - | समवायः |

**समवायसम्बन्धावच्छिन्न-रूपत्वावच्छिन्न-रूपनिष्ठ-प्रतियोगिताकाभावः।**

**३. ज्ञानाभावः (समवायसम्बन्धेन ज्ञानं नास्ति)**

**समवायसम्बन्धावच्छिन्न-ज्ञानत्वावच्छिन्न-ज्ञाननिष्ठ-प्रतियोगिताकाभावः।**

**४. घटभेदः (घटो न इत्याकारकप्रतीतिसिद्धान्योन्याभावः)**

| | | |
|---|---|---|
| प्रतियोगी | - | घटः |
| प्रतियोगितावच्छेदकम् | - | घटत्वम् |
| प्रतियोगितावच्छेदकसम्बन्धः | - | तादात्म्यम् |

(भेदीयप्रतियोगितावच्छेदकसम्बन्धः तादात्म्यसम्बन्ध एव भवति। अत एव तादात्म्य-सम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् इति तल्लक्षणम्।)

**तादात्म्यसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-घटनिष्ठप्रतियोगिताकभेदः।**

**५. दण्डभेदः (दण्डो न इत्याकारकप्रतीतिसिद्धभेदः)**

**तादात्म्यसम्बन्धावच्छिन्न-दण्डत्वावच्छिन्न-दण्डनिष्ठप्रतियोगिताकभेदः।**

❒



# नियमप्रकरणम्

१. काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्।
२. अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।
३. सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनमन्याय्यम्।
४. उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावः।
५. उत्पन्नं द्रव्यं क्षणं निर्गुणं निष्क्रियञ्च तिष्ठति।
६. जन्यानां जनकः कालो जगतामाश्रयो मतः।
७. एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयति।
८. अन्यूनानतिप्रसक्तो धर्मः अवच्छेदको भवति।
९. यो धर्मो यस्यावच्छेदकः स तद्धर्मावच्छिन्नः।
१०. पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन।
११. निपातातिरिक्तनामार्थयोः भेदान्वयबोधोऽव्युत्पन्नः।
१२. ययोः सामानाधिकरण्यं तयोरेवकार्यकारणभावः।
१३. अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते।
१४. आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः।
१५. मतुबन्ताद् विहितो भावप्रत्ययः प्रकृत्यर्थं गमयति।
१६. निर्गुणा निष्क्रिया गुणाः।
१७. जन्यमात्रं कालोपाधिः।
१८. नित्येषु कालिकायोगः।
१९. गुरुत्वादृष्टभावना अतीन्द्रियाः।
२०. यस्याभावः स प्रतियोगी।




Scanned by CamScanner

२१. य उत्पद्यते स प्रागभावप्रतियोगी।

२२. यो नश्यति स ध्वंसप्रतियोगी।

२३. ध्वंसं प्रति प्रतियोगिनः कारणत्वम्।

२४. अत्यन्ताभावस्याभावः प्रतियोगिस्वरूपः।

२५. अन्योन्याभावस्याभावः प्रतियोगितावच्छेदकस्वरूपः।

२६. स्वप्रतियोगिना सह अत्यन्ताभावस्य विरोधः।

२७. स्वप्रतियोगितावच्छेदकेन सह अन्योन्याभावस्य विरोधः।

२८. विभिन्नकालीनयोर्विषयतान्यसम्बन्धेन आधाराधेयभावविरहः।

२९. योग्यविभुविशेषगुणानां स्वोत्तरवर्तिविशेषगुणनाश्यत्वनियमः।

३०. योग्यविभुविशेषगुणानां यौगपद्यनिषेधः।

३१. अन्तराभासमानविषयतयोरभेदः।

३२. अन्तराभासमानविषयतयोरवच्छेद्यावच्छेदकभावः।

३३. येनेन्द्रियेण या व्यक्तिर्गृह्यते तेनैवेन्द्रियेण तद्गता जातिः तदभावश्च गृह्यते।

३४. येन सम्बन्धेन यत्रास्तीत्युच्यते स सम्बन्धः प्रतियोगितावच्छेदकसम्बन्धः।

३५. असति बाधके उद्देश्यतावच्छेदकव्यापकत्वं विधेये विधेयसंसर्गे वा भासते।

३६. यद्वैशिष्ट्यं यत्र भासते तदेव स्वपदार्थः।

३७. विशिष्टबुद्धौ विशेषणज्ञानं कारणम्।

३८. विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानं कारणम्।

३९. विशेषणे यद् विशेषणं तदेव विशेषणतावच्छेदकम्।

४०. विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वम्।

४१. तदभावाऽप्रकारा धीस्तत्प्रकारा तु निश्चयः।

४२. लौकिकसन्निकर्षाजन्य-दोषविशेषाजन्यतद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयः तदभावव्याप्यवत्तानिश्चयश्च प्रतिबन्धकः।





४३. आत्मा मनसा युज्यते मन इन्द्रियेण इन्द्रियमर्थेन ततः प्रत्यक्षं जायते।

४४. सादृश्यादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः।

४५. कालस्य रोगस्य चरमफलप्राप्तेश्च संस्कारनाशकत्वनियमः।

४६. नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमः।

४७. आश्रयनाशाऽजन्यगुणनाशस्य विरोधिगुणजन्यत्वनियमः।

४८. यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयम्।

४९. हेतुघटकविशेषणानां व्यभिचारवारकत्वेन सार्थक्यं चेत् सार्थक्यं नो चेद् वैयर्थ्यम्।

५०. जात्यखण्डोपाध्यतिरिक्तपदार्थानां किञ्चिद्धर्मपुरस्कारेण भासमानत्वनियमः।

५१. उल्लिख्यमाना जातिः किञ्चिद्धर्मपुरस्कारेण भासते।

५२. अनुल्लिख्यमाना जातिः स्वरूपतो भासते।

५३. यद्धर्मावच्छिन्नवाचकपदोत्तरं नञादिपदं श्रूयते तेन तद्धर्मावच्छिन्नप्रतियोगिताकाभावावगाहनं क्रियते।

५४. ज्ञानानुकूलो व्यापारो निपूर्वकरूप्धातोरर्थः।

५५. स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकज्ञानानुकूलो व्यापारो विभजतेरर्थः।

५६. प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः (न्या.सू.)।

५७. दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः। (न्या.सू.)

५८. प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि। (न्या.सू.)

५९. आत्म-शरीर-इन्द्रिय-अर्थ-बुद्धि-मनः-प्रवृत्ति-दोष-प्रेत्यभाव-फल-दुःख-अपवर्गास्तु प्रमेयम्। (न्या.सू.)

६०. यतोऽभ्युदयनिश्रेयससिद्धिः स धर्मः। (वै.सू.)

६१. धर्मविशेषप्रसूताद् द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्। (वै.सू.)




Scanned by CamScanner

६१. ईश्वरज्ञानयत्नेच्छा कालोऽदृष्टं दिगेव च।
प्रागभावप्रतिबन्धकाभावौ कार्ये साधारणाः स्मृताः॥

६२. बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः।
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः॥

६३. संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा।
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः॥

६४. भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत्॥

६५. हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले।
उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः॥

६६. प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां सेयमान्विक्षिकी मता॥

६७. न्यायचवैयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तरा गता॥

६८. जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्॥

६९. यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते॥

७०. वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति॥

७१. शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥





७२. वायोर्नवैकादशतेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश।
दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च॥

७३. एकं दश शतं चैव सहस्रमयुतं तथा।
लक्षं च नियुतं चैव कोटिरर्बुदमेव च॥
वृन्दं खर्वो निखर्वश्च शंखः पद्मश्च सागरः।
अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम्॥

७४. कपिलस्य कणादस्य गौतमस्य पतञ्जलेः।
व्यासस्य जैमिनेश्चैव दर्शनानि षडेव हि॥

**इति नियमप्रकरणम्**

❐

**मोहं रुणद्धि विमलीकुरुते च बुद्धिम्।**
**सूते च संस्कृतपदव्यवहारशक्तिम्।।**
**शास्त्रान्तराऽभ्यसनयोग्यतया युनक्ति।**
**तर्कश्रमो न कुरुते कमिहोपकारम्।।**

ॐ

# लक्षणप्रकरणम्

(खण्ड-क)

**पदार्थः**-पदजन्यप्रतीतिविषयत्वं पदार्थस्य लक्षणम्।

**१. द्रव्यम्** - गुणवत्त्वम् द्रव्यस्य लक्षणम्।
- गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वं द्रव्यस्य लक्षणम्।

**२. गुणः** - द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वं गुणस्य लक्षणम्।

**३. कर्म** - संयोगभिन्नत्वे सति संयोगाऽसमवायिकारणत्वं कर्मणो लक्षणम्।
- द्रव्यगुणभिन्नत्वे सति सामान्यवत्त्वं कर्मणो लक्षणम्।

**४. सामान्यम्** - नित्यत्वे सति अनेकसमवेतत्वं सामान्यस्य लक्षणम्।
- निःसामान्यत्वे सति विशेषान्यत्वे सति समवेतत्वं सामान्यस्य लक्षणम्।

**५. विशेषः** - अन्यत्वे (स्वतोव्यावृत्तत्वे) सति नित्यद्रव्यवृत्तित्वं विशेषस्य लक्षणम्।
- निःसामान्यत्वे सति सामान्यभिन्नत्वे सति समवेतत्वं विशेषस्य लक्षणम्।

**६. समवायः** - नित्यत्वे सति सम्बन्धत्वं समवायस्य लक्षणम्।

**७. अभावः** - प्रतियोगिज्ञानाधीनज्ञानविषयत्वमभावस्य लक्षणम्।
- भावभिन्नत्वम् अभावस्य लक्षणम्।

❒

**१. पृथिवी** - गन्धवत्त्वं पृथिव्या लक्षणम्।
- गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणम्।

**२. जलम्** - शीतस्पर्शवत्त्वं जलस्य लक्षणम्।
- शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं जलस्य लक्षणम्।

**३. तेजः** - उष्णस्पर्शवत्त्वं तेजसो लक्षणम्।





- उष्णस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं तेजसो लक्षणम्।

**४. वायुः** - रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम्।
- रूपरहितत्वविशिष्टस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं वायोर्लक्षणम्।

**५. आकाशम्** - शब्दाश्रयत्वम् आकाशस्य लक्षणम्।

**६. कालः** - अतीतादिव्यवहाराऽसाधारणकारणत्वं कालस्य लक्षणम्।

**७. दिक्** - प्राच्यादिव्यवहाराऽसाधारणकारणत्वं दिशो लक्षणम्।

**८. आत्मा** - समवायसम्बन्धेन ज्ञानाश्रयत्वम् आत्मनो लक्षणम्।
- नित्यज्ञानाश्रयत्वम् ईश्वरस्य लक्षणम्।
- सुखसमवायिकारणत्वं जीवस्य लक्षणम्।

**९. मनः** - सुखादिसाक्षात्कारकारणत्वे सति इन्द्रियत्वं मनसो लक्षणन्।
- स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम्।

❒

**१. रूपम्** - चक्षुर्मात्रग्राह्यत्वे सति गुणत्वं रूपस्य लक्षणम्।
- चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रूपस्य लक्षणम्।

**२. रसः** - रसनाग्राह्यत्वे सति गुणत्वं रसस्य लक्षणम्।
- रसनेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रसस्य लक्षणम्।

**३. गन्धः** - घ्राणग्राह्यत्वे सति गुणत्वं गन्धस्य लक्षणम्।
- घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं गन्धस्य लक्षणम्।

**४. स्पर्शः** - त्वगिन्द्रियमात्रग्राह्यत्वे सति गुणत्वं स्पर्शस्य लक्षणम्।
- त्वग्भिन्नेन्द्रियजन्यप्रत्यक्षाऽविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं स्पर्शस्य लक्षणम्।

**५. सङ्ख्या** - एकत्वादिव्यवहाराऽसाधारणकारणत्वं सङ्ख्याया लक्षणम्।




Scanned by CamScanner

६. परिमाणम् - मानव्यवहाराऽसाधारणकारणत्वं परिमाणस्य लक्षणम्।

७. पृथक्त्वम् - पृथग्व्यवहाराऽसाधारणकारणत्वं पृथक्त्वस्य लक्षणम्।

८. संयोगः - संयुक्तव्यवहाराऽसाधारणकारणत्वं संयोगस्य लक्षणम्।

९. विभागः - संयोगनाशाऽसाधारणकारणत्वे सति गुणत्वं विभागस्य लक्षणम्।

१०. परत्वम् - परव्यवहाराऽसाधारणकारणत्वं परत्वस्य लक्षणम्।

११. अपरत्वम् - अपरव्यवहाराऽसाधारणकारणत्वम् अपरत्वस्य लक्षणम्।

१२. गुरुत्वम् - आद्यपतनाऽसमवायिकारणत्वं गुरुत्वस्य लक्षणम्।

१३. द्रवत्वम् - आद्यस्यन्दनाऽसमवायिकारणत्वं द्रवत्वस्य लक्षणम्।

१४. स्नेहः - चूर्णादिपिण्डीभावाऽसाधारणकारणत्वं स्नेहस्य लक्षणम्।

१५. शब्दः - श्रोत्रग्राह्यत्वे सति गुणत्वं शब्दस्य लक्षणम्।

- श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्षणम्।

१६. बुद्धिः - सर्वव्यवहाराऽसाधारणकारणत्वं बुद्धेर्लक्षणम्।

१७. सुखम् - सर्वेषामनुकूलवेदनीयत्वं सुखस्य लक्षणम्।

- इतरेच्छानधीनेच्छाविषयत्वं सुखस्य लक्षणम्।

१८. दुःखम् - सर्वेषां प्रतिकूलवेदनीयत्वं दुःखस्य लक्षणम्।

- इतरद्वेषानधीनद्वेषविषयत्वं दुःखस्य लक्षणम्।

१९. इच्छा - ज्ञानजन्यत्वे सति कृतिजनकत्वम् इच्छाया लक्षणम्।

२०. द्वेषः - (द्वेष्मीत्यनुभवसिद्ध) द्वेषत्वजातिमत्वं द्वेषस्य लक्षणम्।

२१. प्रयत्नः - इच्छाजन्यत्वे सति गुणत्वं प्रयत्नस्य लक्षणम्।

२२. धर्मः - वेदविहितकर्मजन्यत्वं धर्मस्य लक्षणम्।

२३. अधर्मः - वेदनिषिद्धकर्मजन्यत्वम् अधर्मस्य लक्षणम्।

२४. संस्कारः - सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमत्वं संस्कारस्य लक्षणम्।

वेगः - द्वितीयादिपतनाऽसमवायिकारणत्वं वेगस्य लक्षणम्।

भावना - अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम्।





स्थितिस्थापकः - पृथिवीमात्रसमवेतत्वे सति संस्कारत्वव्याप्यजातिमत्वं स्थितिस्थापकस्य लक्षणम्।

❒

१. उत्क्षेपणम् - ऊर्ध्वदेशसंयोगहेतुत्वम् उत्क्षेपणस्य लक्षणम्।

२. अपक्षेपणम् - अधोदेशसंयोगहेतुत्वम् अपक्षेपणस्य लक्षणम्।

३. आकुञ्चनम् - शरीरसन्निकृष्टसंयोगहेतुत्वम् आकुञ्चनस्य लक्षणम्।

४. प्रसारणम् - शरीरविप्रकृष्टसंयोगहेतुत्वं प्रसारणस्य लक्षणम्।

५. गमनम् - उत्क्षेपणादिभिन्नत्वे सति कर्मत्वं गमनस्य लक्षणम्।

❒

१. प्रागभावः - विनाशित्वे सति अभावत्वं प्रागभावस्य लक्षणम्।

२. प्रध्वंसाभावः - उत्पत्तिमत्वे सति अभावत्वं प्रध्वंसाभावस्य लक्षणम्।

३. अत्यन्ताभावः - तादात्म्याऽतिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् अत्यन्ताभावस्य लक्षणम्।

४. अन्योन्याभावः - तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् अन्योन्याभावस्य लक्षणम्।

❒




Scanned by CamScanner

# लक्षणप्रकरणम्

(खण्ड - ख)

१. बालक: - अधीतव्याकरणकाव्यकोषत्वे सति अनधीतन्यायशास्त्रत्वं बालस्य लक्षणम्।

२. लक्षणम् - असाधारणधर्मत्वं लक्षणस्य लक्षणम्।

३. अव्याप्ति: - लक्ष्यैकदेशाऽवृत्तित्वमव्याप्ते: लक्षणम्।
- लक्ष्यतावच्छेदकसमानाधिकरणाऽत्यन्ताभावप्रतियोगित्वम् अव्याप्ते: लक्षणम्।

४. अतिव्याप्ति: - लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम् अतिव्याप्ते: लक्षणम्।
- लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेदकावच्छिन्न-प्रतियोगिताकभेदसामानाधिकरण्यम् अतिव्याप्ते: लक्षणम्।

५. असम्भव: - लक्ष्यमात्राऽवृत्तित्वमसम्भवस्य लक्षणम्।
- लक्ष्यतावच्छेदकव्यापकीभूताऽभावप्रतियोगित्वम् असम्भवस्य लक्षणम्।

६. नित्य: - ध्वंसभिन्नत्वे सति ध्वंसाऽप्रतियोगित्वं नित्यस्य लक्षणम्।

७. अनित्य: - ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं वा अनित्यस्य लक्षणम्।

८. शरीरम् - भोगायतनत्वं शरीरस्य लक्षणम्।
- अन्त्यावयवित्वे सति चेष्टाश्रयत्वं शरीरस्य लक्षणम्।

भोग: - सुखदु:खान्यतरसाक्षात्कारो भोग:।

चेष्टा - हिताहितप्राप्तिपरिहारानुकूला क्रिया चेष्टा।

९. इन्द्रियम् - शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमन:संयोगाश्रयत्वम् इन्द्रियस्य लक्षणम्।

१०. घ्राणम् - गन्धविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं घ्राणस्य लक्षणम्।

११. रसना - रसविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं रसनाया लक्षणम्।

१२. चक्षु: - रूपविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं चक्षुषो लक्षणम्।

१३. त्वक् - स्पर्शविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं त्वचो लक्षणम्।





१४. श्रोत्रम् - शब्दविषयकप्रत्यक्षजनकत्वे सति इन्द्रियत्वं श्रोत्रस्य लक्षणम्।

१५. विषय: - शरीरेन्द्रियभिन्नत्वे सति उपभोगसाधनत्वं विषयस्य लक्षणम्।

१६. प्राण: - शरीरान्त:वृत्तित्वे सति सञ्चारित्वे सति वायुत्वं प्राणस्य लक्षणम्।

१७. भूतम् - बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं भूतस्य लक्षणम्।
- आत्माऽवृत्तिविशेषगुणवत्त्वं भूतस्य लक्षणम्।

१८. मूर्तम् - क्रियाश्रयत्वं मूर्तस्य लक्षणम्।

१९. विभु: - सर्वमूर्तद्रव्यसंयोगित्वं विभो: लक्षणम्।

२०. कार्यम् - प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम्।

२१. कारणम् - अन्यथासिद्धभिन्नत्वे सति कार्यपूर्ववृत्तित्वं कारणस्य लक्षणम्।

अन्यथासिद्ध: - अवश्यक्लृप्तनियतपूर्ववर्तिभिरेव कार्यसम्भवे तद्भिन्नत्वम् अन्यथासिद्धस्य लक्षणम्।

२२. करणम् - व्यापारजनकत्वे सति असाधारणकारणत्वं करणस्य लक्षणम्।

व्यापार: - तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारस्य लक्षणम्।

२३. समवायिकारणम् - यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्।
- समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्न-कारणताश्रयत्वं समवायिकारणस्य लक्षणम्।

२४. असमवायिकारणम् - कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति कारणत्वम् असमवायिकारणस्य लक्षणम्।
- समवायसम्बन्धावच्छिन्नकार्यतानिरूपित-समवाय-स्वसमवायिसमवेतत्वान्यतर-सम्बन्धावच्छिन्नकारणताश्रयत्वम् असमवायिकारणस्य लक्षणम्।

२५. निमित्तकारणम् - समवायिकारणभिन्नत्वे सति असमवायिकारणभिन्नत्वे सति कारणत्वं निमित्तकारणस्य लक्षणम्।

२६. साधारणकारणम् - कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं साधारणकारणस्य लक्षणम्।

२७. असाधारणकारणम् - कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम् असाधारण-कारणस्य लक्षणम्।




Scanned by CamScanner

२८. **प्रतिबन्धकः** - कारणीभूताऽभावप्रतियोगित्वं प्रतिबन्धकस्य लक्षणम्।
- कार्यानुकूलधर्मविघटकत्वं प्रतिबन्धकस्य लक्षणम्।

२९. **उत्तेजकः** - प्रतिबन्धकसत्त्वे कार्यजनकत्वं उत्तेजकस्य लक्षणम्।

३०. **स्मृतिः** - बहिरिन्द्रियाऽजन्यत्वे सति संस्कारजन्यत्वे सति ज्ञानत्वं स्मृतेः लक्षणम्।

३१. **अनुभवः** - स्मृतिभिन्नत्वे सति ज्ञानत्वम् अनुभवस्य लक्षणम्।

**प्रत्यभिज्ञा** - तत्तेदन्तावगाहिज्ञानं प्रत्यभिज्ञा।

३२. **प्रमा (यथार्थानुभवः)** - तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वं प्रमाया लक्षणम्।
- तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालि-अनुभवत्वं प्रमाया लक्षणम्।

३३. **भ्रमः (अयथार्थानुभवः)** - तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वे सति अनुभवत्वं भ्रमस्य लक्षणम्।
- तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालि-अनुभवत्वम् अयथार्थानुभवस्य लक्षणम्।

३४. **प्रत्यक्षप्रमा** - भ्रमभिन्नत्वे सति इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वं प्रत्यक्षप्रमाया लक्षणम्।

३५. **अनुमितिः** - परामर्शजन्यत्वे सति ज्ञानत्वम् अनुमितेः लक्षणम्।
- व्याप्तिज्ञानकरणकत्वे सति ज्ञानत्वम् अनुमितेः लक्षणम्।

३६. **उपमितिः** - सादृश्यज्ञानकरणकत्वे सति ज्ञानत्वम् उपमितेः लक्षणम्।

३७. **शाब्दप्रमा** - पदज्ञानकरणकत्वे सति ज्ञानत्वं शाब्दप्रमाया लक्षणम्।

३८. **प्रमाणम्** - प्रमाकरणत्वं प्रमाणस्य लक्षणम्।

३९. **प्रत्यक्षप्रमाणम्** - प्रत्यक्षप्रमाकरणत्वं प्रत्यक्षप्रमाणस्य लक्षणम्।

४०. **अनुमानम्** - अनुमितिकरणत्वम् अनुमानस्य लक्षणम्।

४१. **उपमानम्** - उपमितिकरणत्वम् उपमानस्य लक्षणम्।

४२. **शब्दप्रमाणम्** - शाब्दप्रमाकरणत्वं शब्दप्रमाणस्य लक्षणम्।

४३. **परामर्शः** - व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वं परामर्शस्य लक्षणम्।

**किं किं न साधयति कल्पलतेव विद्या।**



४४. **व्याप्तिः** - साहचर्यनियमो व्याप्तिः।
- साध्याभाववदवृत्तित्वं व्याप्तिः।
- हेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिः।
- साध्याभावव्यापकीभूताभावप्रतियोगित्वं व्याप्तिः।

४५. **अन्वयव्यतिरेकि** - अन्वयप्रयोज्यव्याप्तिमत्त्वे सति व्यतिरेकप्रयोज्यव्याप्तिमत्त्वं अन्वय-व्यतिरेकिणो लक्षणम्।

४६. **केवलान्वयि** - व्यतिरेकप्रयोज्यव्याप्तिशून्यत्वे सति अन्वयप्रयोज्यव्याप्तिमत्त्वं केवलान्वयिनो लक्षणम्।

४७. **केवलव्यतिरेकि** - अन्वयप्रयोज्यव्याप्तिशून्यत्वे सति व्यतिरेकप्रयोज्यव्याप्तिमत्त्वं केवल-व्यतिरेकिणो लक्षणम्।

४८. **सद्धेतुः** - व्याप्तिपक्षधर्मतावत्त्वं सद्धेतोः लक्षणम्।

४९. **असद्धेतुः** - व्याप्तिपक्षधर्मत्वाभाववत्त्वम् असद्धेतोः लक्षणम्।

५०. **न्यायः** - पञ्चावयववाक्यसमुदायत्वं न्यायस्य लक्षणम्।

५१. **अवयवः** - प्रतिज्ञाद्यन्यतमत्वम् अवयवस्य लक्षणम्।

५२. **स्वार्थानुमानम्** - न्यायाऽप्रयोज्यत्वे सति अनुमानत्वं स्वार्थानुमानस्य लक्षणम्।

५३. **परार्थानुमानम्** - न्यायप्रयोज्यत्वे सति अनुमानत्वं परार्थानुमानस्य लक्षणम्।

५४. **पक्षता** - सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता।

५५. **हेत्वाभासः** - अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासस्य लक्षणम्।

**साधारणव्यभिचारः** - साध्याभाववद्वृत्तिहेतुः।

**असाधारणव्यभिचारः** - साध्याऽसमानाधिकरणहेतुः।

**अनुपसंहारी** - अत्यन्ताभावाऽप्रतियोगिसाध्यकादिः।

**विरोधः** - साध्यव्यापकीभूताऽभावप्रतियोगिहेतुः।

**सत्प्रतिपक्षः** - साध्याभावव्याप्यवत्पक्षः।

**आश्रयासिद्धिः** - पक्षतावच्छेदकाभाववत्पक्षः।

**स्वरूपासिद्धिः** - हेत्वभाववत्पक्षः।

**त्याज्यं न धैर्यं विधुरेऽपि काले।**


Scanned by CamScanner

**व्याप्यत्वासिद्धिः** - सोपाधिकहेतुः।

**उपाधिः** - साध्यव्यापकत्वे सति साधनाऽव्यापकत्वम् उपाधेः लक्षणम्।

**बाधः** - साध्याभाववत्पक्षः।

५६. **आकाङ्क्षा** - यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तशाब्दबोधजनकत्वाभावः तत्पदे तत्पदवत्त्वमाकाङ्क्षा।

५७. **योग्यता** - बाधाभावो योग्यता।

५८. **सन्निधिः** - पदानामविलम्बेनोच्चारणं सन्निधिः।

**तात्पर्यम्** - वक्तुरिच्छा तात्पर्यम्।

५९. **शक्तिः** - अर्थस्मृत्यनुकूलपदपदार्थसम्बन्धत्वं शक्तेः लक्षणम्।

६०. **शक्तम्** - निरूपकतासम्बन्धेन शक्तिमत्त्वं शक्तस्य लक्षणम्।

६१. **शक्यः** - विषयतासम्बन्धेन शक्तिमत्त्वं शक्यस्य लक्षणम्।

६२. **लक्षणा** - शक्यसम्बन्धो लक्षणा।

६३. **जहल्लक्षणा** - लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा जहल्लक्षणा।

६४. **अजहल्लक्षणा** - लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका लक्षणा अजहल्लक्षणा।

६५. **जहदजहल्लक्षणा**- शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका लक्षणा जहदजहल्लक्षणा।

६६. **संशयः** - एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहिज्ञानत्वं संशयस्य लक्षणम्।

- एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावोभयनिष्ठप्रकारता-शालिज्ञानत्वं संशयस्य लक्षणम्।

६७. **विपर्ययः** - मिथ्याज्ञानत्वं विपर्ययस्य लक्षणम्।

६८. **तर्कः** - व्याप्यविषयकभ्रमजन्यव्यापकविषयकभ्रमत्वं तर्कस्य लक्षणम्।

६९. **अनुबन्धः** - ग्रन्थाध्ययनप्रवृत्तिप्रयोजकज्ञानविषयत्वम् अनुबन्धस्य लक्षणम्।

७०. **क्षणिकत्वम्** - तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं क्षणिकत्वम्।

७१. **व्याप्यवृत्तित्वम्** - स्वाधिकरणवृत्त्यत्यन्ताभावाऽप्रतियोगित्वम्।





७२. **अव्याप्यवृत्तित्वम्**- स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वम्।

७३. **व्यापकत्वम्** - तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् तद्व्यापकत्वम्।

- तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं तद्व्यापकत्वम्।

७४. **व्यापकतावच्छेदकत्वम्**- तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वं तद्व्यापकतावच्छेदकत्वम्।

७५. **व्याप्यत्वम्** - तदभाववदवृत्तित्वं तद्व्याप्यत्वम्।

**इति लक्षणप्रकरणम्**

❐

# साधर्म्यवैधर्म्यप्रकरणम्

१. द्रव्यादिसप्तानाम् - ज्ञेयत्वम्, अभिधेयत्वम्, प्रमेयत्वम्।
२. द्रव्यादिषण्णाम् - भावत्वम्
३. द्रव्यादिपञ्चानाम् - अनेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
- समवायसम्बन्धेन सम्बन्धित्वम्।
४. द्रव्यादिचतुर्णाम् - समवेतसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
५. द्रव्यादित्रयाणाम् - सत्तावत्त्वम्।
६. द्रव्यगुणयोः - नित्याऽनित्योभयवृत्तिसत्ताभिन्नजातिमत्त्वम्।
७. गुणादिषण्णाम् - गुणवदवृत्तिधर्मवत्त्वम्।
- कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
८. गुणादिपञ्चानाम् - गुणवदवृत्तिभाववृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
९. गुणादिचतुर्णाम् - गुणवदवृत्तिसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
१०. गुणादित्रयाणाम् - अन्त्याऽवयविसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
११. गुणकर्मणोः - असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वम्।
१२. कर्मादिपञ्चानाम् - नित्याऽनित्योभयभावाऽवृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
१३. कर्मादिचतुर्णाम् - नित्यानित्योभयाऽवृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
१४. कर्मादित्रयाणाम् - नित्यानित्योभयाऽवृत्तिसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
१५. कर्मसामान्ययोः - गुणावृत्ति-अन्त्यावयविसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
१६. सामान्यादिचतुर्णाम् - सामान्यानधिकरणत्वम्।
- समवायाऽननुयोगित्वम्।
१७. सामान्यादित्रयाणाम् - सामान्यरहितत्वे सति भावत्वम्।





१८. सामान्यविशेषयोः - सामान्यरहितत्वे सति समवेतत्वम्।
१९. विशेषादित्रयाणाम् - जन्यद्रव्यसमवेताऽवृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
२०. विशेषसमवाययोः - जन्यद्रव्यसमवेताऽवृत्तिभाववृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
२१. समवायाभावयोः - समवेताऽवृत्तिपदार्थविभाजकोपाधिमत्त्वम्।
२२. नित्यद्रव्यभिन्नानाम् - आश्रितत्वम्।
२३. पारिमाण्डल्य-(अणुपरिमाण) भिन्नानाम् - कारणत्वम्।
२४. क्षित्यादिनवानाम् - द्रव्यत्ववत्त्वम्। गुणवत्त्वम्।
२५. पृथिव्यप्तेजोवायुमनसाम् - परत्ववत्त्वम्। अपरत्ववत्त्वम्। मूर्तत्ववत्त्वम्। क्रियावत्त्वम्। वेगवत्त्वम्।
२६. कालखात्मदिशाम् - सर्वमूर्तद्रव्यसंयोगित्वम्। परममहत्त्वम्।
२७. क्षित्यादिपञ्चानाम् - भूतत्वम् (बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्) (आत्मावृत्ति-विशेषगुणवत्त्वम्)
२८. क्षित्यादिचतुर्णाम् - स्पर्शवत्त्वम्। द्रव्यसमवायिकारणत्वम्।
२९. आकाशात्मनाम् - अव्याप्यवृत्तिविशेषगुणवत्त्वम्।
- क्षणिकविशेषगुणवत्त्वम्।
३०. क्षित्यादित्रयाणाम् - रूपवत्त्वम्। द्रवत्ववत्त्वम्। प्रत्यक्षविषयत्वम्।
३१. पृथिवीजलयोः - रसवत्त्वम्। गुरुत्ववत्त्वम्।
३२. पृथिवीतेजसोः - नैमित्तिकद्रवत्ववत्त्वम्।
३३. आत्मभूतानाम् - विशेषगुणवत्त्वम्।

**यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत्।**
**इति साधर्म्यवैधर्म्यप्रकरणम्**

❒

# परिशिष्टः

१. मंगलं सफलम् अविगीतशिष्टाचारविषयत्वात्। दर्शादिवत्।

२. मंगलं समाप्तिफलकं समाप्त्यन्याऽफलकत्वे सति सफलत्वात्।

३. क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात्। घटवत्।

४. क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराऽजन्यत्वात्। गगनवत्।

५. शक्तिः द्रव्यगुणकर्मभिन्ना गुणवृत्तित्वात्। घटत्ववत्।

६. शक्तिः सामान्यादिभिन्ना उत्पत्तिमत्त्वे सति विनाशित्वात्। घटवत्।

७. सादृश्यं सप्तपदार्थातिरिक्तं षड्भावानन्तर्भूतत्वे सति अभावानन्तर्भूतत्वात्।

८. सादृश्यं षड्भावानन्तर्भूतं सामान्येऽपि सत्त्वात्।

९. सादृश्यम् अभावानन्तर्भूतं सत्त्वेन प्रतीयमानत्वात्।

१०. समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नद्रव्यनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्। घटत्वावच्छिन्नकार्यतानिरूपित-कपालत्वावच्छिन्नकारणतावत्।

११. समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नद्रव्यनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्। घटत्वावच्छिन्नकार्यतानिरूपित-कपालत्वावच्छिन्नकारणतावत्।

१२. समवायसम्बन्धावच्छिन्नविभागत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नद्रव्यनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्। घटत्वावच्छिन्नकार्यतानिरूपितकपालत्वावच्छिन्नकारणतावत्।

१३. द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्।

१४. समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नपृथिवीनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्।

१५. समवायसम्बन्धावच्छिन्नजन्यस्नेहत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजन्यजलनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्।





१६. समवायसम्बन्धावच्छिन्नजन्यजलत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजलनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्।

१७. समवायसम्बन्धावच्छिन्नजन्योष्णस्पर्शत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजन्यतेजोनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्।

१८. समवायसम्बन्धावच्छिन्नजन्यतेजस्त्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नतेजोनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्।

१९. समवायसम्बन्धावच्छिन्नजन्याऽपाकजाऽनुष्णाशीतस्पर्शत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजन्यवायुनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्।

२०. समवायसम्बन्धावच्छिन्नजन्यवायुत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नवायुनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्।

२१. समवायसम्बन्धावच्छिन्नसुखत्वावच्छिन्नसुखनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्न-आत्मनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्।

२२. सुखादिसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात्। चाक्षुषसाक्षात्कारवत्।

२३. तमः पृथिवीभिन्नं गन्धशून्यत्वात्। जलवत्।

२४. तमः जलादिभिन्नं नीलरूपवत्त्वात्। पृथिवीवत्।

२५. परमाणुः परमाण्वन्तरभिन्नः विशेषात्।

२६. "गुणवान् घटः" इति विशिष्टबुद्धिः विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात्। "दण्डी पुरुषः" इति विशिष्टबुद्धिवत्।

२७. "क्रियावान् घटः" इति विशिष्टबुद्धिः विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात्। "दण्डी पुरुषः" इति विशिष्टबुद्धिवत्।

२८. पाषाणभष्म पाषाणोपादानोपादेयं पाषाणध्वंसजन्यत्वात्। महापटध्वंसजन्यखण्डपटवत्।

२९. त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात्। घटवत्।

३०. त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात्। कपालवत्।

३१. मानुषादिशरीरं पार्थिवं गन्धवत्त्वात्। घृतादिवत्।




Scanned by CamScanner

३२. घ्राणेन्द्रियं पार्थिवं रूपादिविषयकप्रत्यक्षाऽजनकत्वे सति गन्धविषयकप्रत्यक्षजनकत्वात्। वायूपनीतसुरभिभागवत्।

३३. रसनेन्द्रियं जलीयं गन्धादिविषयकप्रत्यक्षाऽजनकत्वे सति रसविषयकप्रत्यक्षजनकत्वात्। सक्तुरसाभिव्यञ्जकोदकवत्।

३४. चक्षुस्तैजसं स्पर्शादिविषयकप्रत्यक्षाऽजनकत्वे सति परकीयरूपविषयकप्रत्यक्षजनकत्वात्। प्रभावत्।

३५. त्वगिन्द्रियं वायवीयं रूपादिविषयकप्रत्यक्षाऽजनकत्वे सति स्पर्शविषयकप्रत्यक्षजनकत्वात्। अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत्।

३६. सुवर्णं तैजसम् असतिप्रतिबन्धके अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात्। यन्नैवं तन्नैवं यथा पृथिवी।

३७. अत्यन्ताग्निसंयोगी पीतिमगुरुत्वाश्रयः, विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः, अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात्। जलमध्यस्थपीतघृतवत्।

३८. शब्दो विशेषगुणः चक्षुर्ग्रहणाऽयोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात्। स्पर्शवत्।

३९. शब्दो द्रव्यसमवेतो गुणत्वात्। रूपवत्।

४०. शब्दः स्पर्शवद्विशेषगुणत्वाभाववान् अग्निसंयोगाऽसमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वात्। सुखवत्।

४१. शब्दो दिक्कालमनोगुणत्वाभाववान् विशेषगुणत्वात्। रूपवत्।

४२. शब्दः आत्मविशेषगुणत्वाभाववान् बहिरिन्द्रियग्राह्यत्वात्। रूपवत्।

४३. शब्दो वायुविशेषगुणत्वाभाववान् आश्रयनाशाऽजन्यनाशप्रतियोगित्वात्। (अयावद्द्रव्यभावित्वात्) ज्ञानवत्।

यत्कृपालेशमात्रेण मूको भवति पण्डितः।
तस्य देवस्य चरणौ प्रणिपत्य समर्प्यते।।

इति बालव्युत्पत्तिग्रन्थः

❑

नैकत्र सर्वो गुणसन्निपातः।

# तर्कसंग्रहः

❖ निधाय हृदि विश्वेशं विधाय गुरुवन्दनम्।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः।।

❖ द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः।।

❖ तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव।।

❖ रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः।।

❖ उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि।।

❖ परमपरं चेति द्विविधं सामान्यम्।।

❖ नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव।।

❖ समवायस्त्वेक एव।।

❖ अभावश्चतुर्विधः। प्रागभावप्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति।।

❖ तत्र गन्धवती पृथिवी। सा द्विविधा। नित्याऽनित्या च। नित्या परमाणुरूपा। अनित्या कार्यरूपा। पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनाम्। इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति। विषयो मृत्पाषाणादिः।।

❖ शीतस्पर्शवत्य आपः। ता द्विविधाः नित्याः, अनित्याश्च। नित्याः परमाणुरूपाः, अनित्याः कार्यरूपाः। पुनस्त्रिविधाः शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति। विषयः सरित्समुद्रादिः।।

❖ उष्णस्पर्शवत्तेजः तच्च द्विविधं-नित्यम्, अनित्यञ्च। नित्यं परमाणुरूपम्। अनित्यं कार्यरूपम्। पुनस्त्रिविधं शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके प्रसिद्धम्। इन्द्रियं

रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति। विषयश्चतुर्विधः- भौमदिव्योदर्याकरजभेदात्। भौमं वह्न्यादिकम्। अबिन्धनं दिव्यं विद्युदादि। भुक्तस्य परिणामहेतुरुदर्यम्। आकरजं सुवर्णादि॥

❖ रूपरहितः स्पर्शवान् वायुः। स द्विविधः नित्योऽनित्यश्च॥ नित्यः परमाणुरूपः। अनित्यः कार्यरूपः। पुनस्त्रिविधः शरीरेन्द्रियविषयभेदात्। शरीरं वायुलोके। इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति। विषयो वृक्षादिकम्पनहेतुः। शरीरान्तस्सञ्चारी वायुः प्राणः। स चैकोऽप्युपाधिभेदात् प्राणाऽपानादिसंज्ञां लभते॥

❖ शब्दगुणकमाकाशम्। तच्चैकं विभु नित्यञ्च॥

❖ अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च॥

❖ प्राच्यादिव्यवहारहेतुर्दिक्। सा चैका नित्या विभ्वी च॥

❖ ज्ञानाधिकरणमात्मा। स द्विविधः परमात्मा जीवात्मा चेति। तत्रेश्वरः सर्वज्ञः परमात्मा एक एव। जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च॥

❖ सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यञ्च।

❖ चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्ल-नील-पीत-रक्त-हरित-कपिश-चित्र-भेदात् सप्तविधम्। पृथिवीजलतेजोवृत्ति। तत्र पृथिव्यां सप्तविधम्। अभास्वरशुक्लं जले। भास्वरशुक्लं तेजसि।

❖ रसनाग्राह्यो गुणो रसः। स च मधुर-अम्ल-लवण-कटु-कषाय-तिक्तभेदात् षड्विधः। पृथिवीजलवृत्तिः। तत्र पृथिव्यां षड्विधः। जले मधुर एव॥

❖ घ्राणग्राह्यो गुणो गन्धः। स च द्विविधः सुरभिरसुरभिश्च। पृथिवीमात्रवृत्तिः॥

❖ त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः। स च त्रिविधः शीतोष्णानुष्णाशीतभेदात्॥ पृथिवीजलतेजोवायुवृत्तिः। तत्र शीतो जले। उष्णस्तेजसि। अनुष्णाशीतः पृथिवीवाय्वोः॥

❖ रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यञ्च। अन्यत्राऽपाकजं नित्यमनित्यञ्च। नित्यगतं नित्यम्। अनित्यगतमनित्यम्॥

❖ एकत्वादिव्यवहारहेतुः संख्या। सा नवद्रव्यवृत्तिः। एकत्वादिपरार्धपर्यन्ता। एकत्वं



नित्यमनित्यञ्च। नित्यगतं नित्यम्। अनित्यगतमनित्यम्। द्वित्वादिकं तु सर्वत्राऽनित्यमेव॥

❖ मानव्यवहाराऽसाधारणं कारणं परिमाणम्। नवद्रव्यवृत्ति। तच्चतुर्विधम्, अणु, महत्, दीर्घं, ह्रस्वं चेति॥

❖ पृथग्व्यवहाराऽसाधारणं कारणं पृथक्त्वम्॥ सर्वद्रव्यवृत्ति॥

❖ संयुक्तव्यवहारहेतुः संयोगः। सर्वद्रव्यवृत्तिः॥

❖ संयोगनाशको गुणो विभागः। सर्वद्रव्यवृत्तिः॥

❖ पराऽपरव्यवहारासाधारणकारणे परत्वाऽपरत्वे। पृथिव्यादिचतुष्टयमनोवृत्तिनी। ते द्विविधे दिक्कृते कालकृते च। दूरस्थे दिक्कृतं परत्वम्। समीपस्थे दिक्कृतमपरत्वम्। जेष्ठे कालकृतं परत्वम्। कनिष्ठे कालकृतमपरत्वम्॥

❖ आद्यपतनाऽसमवायिकारणं गुरुत्वम्। पृथिवीजलवृत्ति॥

❖ आद्यस्यन्दनाऽसमवायिकारणं द्रवत्वम्। पृथिवीजलतेजोवृत्ति। तद् द्विविधं सांसिद्धिकं नैमित्तिकं चेति। सांसिद्धिकं जले। नैमित्तिकं पृथिवीतेजसोः। पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम्। तेजसि सुवर्णादौ॥

❖ चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः। जलमात्रवृत्तिः॥

❖ श्रोत्रग्राह्यो गुणः शब्दः। आकाशमात्रवृत्तिः। स द्विविधः। ध्वन्यात्मको वर्णात्मकश्चेति। तत्र ध्वन्यात्मको भेर्यादौ। वर्णात्मकः संस्कृतभाषादिरूपः॥

❖ सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम्। सा द्विविधा स्मृतिरनुभवश्च॥

❖ संस्कारमात्रजन्यं ज्ञानं स्मृतिः॥

❖ तद्भिन्नं ज्ञानमनुभवः। स द्विविधः, यथार्थोऽयथार्थश्चेति॥

❖ तद्वति तत्प्रकारकोऽनुभवो यथार्थः। यथा रजते इदं रजतमिति ज्ञानम्। सैव प्रमेत्युच्यते॥

❖ तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः। यथा शुक्तौ इदं रजतमिति ज्ञानम्। सैवाऽप्रमेत्युच्यते॥

❖ यथार्थानुभवश्चतुर्विधः प्रत्यक्षानुमित्युपमितिशाब्दभेदात्।


Scanned by CamScanner

- तत्करणमपि चतुर्विधं प्रत्यक्षानुमानोपमानशब्दभेदात्।
- असाधारणं कारणं करणम्।।
- कार्यनियतपूर्ववृत्ति कारणम्।।
- कार्यं प्रागभावप्रतियोगि।।
- कारणं त्रिविधं समवाय्यसमवायिनिमित्तभेदात्।।
- यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्। यथा तन्तवः पटस्य, पटश्च स्वगतरूपादेः।।
- कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायिकारणम्। यथा तन्तुसंयोगः पटस्य तन्तुरूपं पटरूपस्य।।
- तदुभयभिन्नं कारणं निमित्तकारणम्। यथा तुरीवेमादिकं पटस्य।।
- तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम्।।
- तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम्।।
- इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। (ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्।) तद् द्विविधम्- निर्विकल्पकं सविकल्पकं चेति।।
- तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम्। यथेदं किञ्चित्।
- सप्रकारकं ज्ञानं सविकल्पकम्, यथा डित्थोऽयं, ब्राह्मणोऽयं, श्यामोऽयमिति।।
- प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः। संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति।
- चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः।।
- घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः। चक्षुःसंयुक्ते घटे रूपस्य समवायात्।।
- रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः। चक्षुःसंयुक्ते घटे रूपं समवेतम्, तत्र रूपत्वस्य समवायात्।।
- श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः। कर्णविवरवर्त्याकाशस्य श्रोत्रत्वात्, शब्दस्याकाशगुणत्वात्, गुणगुणिनोश्च समवायात्।।



- शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः। श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्।।
- अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः। घटाभाववद्भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्।।
- एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम्, तत्करणमिन्द्रियम् तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम्।।

❐

## अथानुमानपरिच्छेदः

- अनुमितिकरणम् अनुमानम्।।
- परामर्शजन्यं ज्ञानम् अनुमितिः।।
- व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा 'वह्निव्याप्यधूमवानयं पर्वत' इति ज्ञानं परामर्शः। तज्जन्यं 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिः।।
- यत्र यत्र धूमस्तत्र तत्राग्निरिति साहचर्यनियमो व्याप्तिः।।
- व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता।।
- अनुमानं द्विविधं स्वार्थं परार्थञ्च।
- स्वार्थं स्वानुमितिहेतुः। तथाहि स्वयमेव भूयो दर्शनेन यत्र यत्र धूमस्तत्र तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाऽग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति, यत्र यत्र धूमस्तत्र तत्राग्निः, इति। तदनन्तरं 'वह्निव्याप्यधूमवानयं पर्वतः' इति ज्ञानमुत्पद्यते। अयमेव लिङ्गपरामर्श इत्युच्यते। तस्मात् 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिरुत्पद्यते। तदेतत् स्वार्थानुमानम्।।
- यत्तु स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानम्। यथा पर्वतो वह्निमान्। धूमवत्त्वात्। यो यो धूमवान् स स वह्निमान्, यथा महानसम्। तथा चायम्। तस्मात्तथा इति। अनेन प्रतिपादितात्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते।।


Scanned by CamScanner

- प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः। 'पर्वतो वह्निमान्' इति प्रतिज्ञा। धूमवत्त्वादिति हेतुः। 'यो यो धूमवान् स स वह्निमान्' इत्युदाहरणम्। तथा चायमित्युपनयः। तस्मात्तथेति निगमनम्॥

- स्वार्थाऽनुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम्। तस्माल्लिङ्गपरामर्शोऽनुमानम्॥

- लिङ्गं त्रिविधम्- अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति। अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि, यथा- वह्नौ साध्ये धूमवत्त्वम्। यत्र धूमस्तत्राग्निर्यथा महानसमित्यन्वयव्याप्तिः। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा महाह्रद इति व्यतिरेकव्याप्तिः॥

- अन्वयमात्रव्याप्तिकं केवलान्वयि। यथा 'घटोऽभिधेयः प्रमेयत्वात्, पटवत्। अत्र प्रमेयत्वाऽभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च॥

- व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि। यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्। यदितरेभ्यो न भिद्यते न तद् गन्धवद् यथा जलम्, न चेयं तथा, तस्मान्न तथेति, अत्र यद् गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात्॥

- सन्दिग्धसाध्यवान् पक्षः। यथा धूमवत्त्वे हेतौ पर्वतः॥

- निश्चितसाध्यवान् सपक्षः। यथा तत्रैव महानसम्॥

- निश्चितसाध्याभाववान् विपक्षः। यथा तत्रैव महाह्रदः॥

- सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्च हेत्वाभासाः॥

- सव्यभिचारोऽनैकान्तिकः। स त्रिविधः साधारणासाधारणानुपसंहारिभेदात्।

- तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः। यथा पर्वतो वह्निमान् प्रमेयत्वादिति। प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात्॥

- सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः। यथा शब्दो नित्यः शब्दत्वादिति। शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति॥

- अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी। यथा सर्वम् अनित्यं प्रमेयत्वादिति। अत्र सर्वस्यापि पक्षत्वाद् दृष्टान्तो नास्ति॥



- साध्याभावव्याप्तो हेतुर्विरुद्धः। यथा शब्दो नित्यः कृतकत्वादिति। कृतकत्वं हि नित्यत्वाऽभावेनाऽनित्यत्वेन व्याप्तम्॥

- यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः। यथा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत्। शब्दोऽनित्यः कार्यत्वाद् घटवत् इति॥

- असिद्धस्त्रिविधः आश्रयासिद्धः, स्वरूपासिद्धो, व्याप्यत्वासिद्धश्चेति॥

- (यस्य हेतोः पक्षाऽप्रसिद्धः स आश्रयासिद्धः) आश्रयासिद्धो यथा गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवदिति। अत्र गगनारविन्दमाश्रयः, स च नास्त्येव॥

- (यो हेतुः पक्षे न तिष्ठति स स्वरूपासिद्धः) स्वरूपासिद्धो यथा शब्दो गुणश्चाक्षुषत्वात्, रूपवदिति। अत्र चाक्षुषत्वं शब्दे नास्ति, शब्दस्य श्रावणत्वात्॥

- सोपाधिको हेतुर्व्याप्यत्वासिद्धः। साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधिः। साध्यसमानाधिकरणाऽत्यन्ताऽभावाऽप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठाऽत्यन्ताऽभावप्रतियोगित्वं साधनाऽव्यापकत्वम्। यथा- पर्वतो धूमवान् वह्निमत्त्वादित्यत्र, आर्द्रेन्धनसंयोग उपाधिः। तथाहि- यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकत्वम्, 'यत्र वह्निस्तत्राऽऽर्द्रेन्धनसंयोगो नास्ति' अयोगोलक आर्द्रेन्धनसंयोगाऽभावादिति साधनाऽव्यापकत्वम्। एवं साध्यव्यापकत्वे सति साधनाऽव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः। सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम्।

- यस्य साध्याभावः प्रमाणान्तरेण पक्षे निश्चितः स बाधितः। यथा- वह्निरनुष्णो द्रव्यत्वादिति। अत्राऽनुष्णत्वं साध्यं, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम्॥

❒


Scanned by CamScanner

## अथोपमानपरिच्छेदः

❖ उपमितिकरणम् उपमानम्। संज्ञा-संज्ञि-सम्बन्धज्ञानमुपमितिः, तत्करणं सादृश्यज्ञानम्। अतिदेशवाक्यार्थस्मरणम् अवान्तरव्यापारः। तथा हि कश्चिद्गवयशब्दवाच्यमजानन् कुतश्चिदारण्यकपुरुषात् 'गोसदृशो गवय' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति, तदनन्तरम् 'अयं गवयशब्दवाच्य' इत्युपमितिरुत्पद्यते॥

❒

## अथ शब्दपरिच्छेदः

❖ आप्तवाक्यं शब्दः। आप्तस्तु यथार्थवक्ता। वाक्यं पदसमूहः यथा– गामानय शुक्लां दण्डेनेति। शक्तं पदम्। अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः॥

❖ आकाङ्क्षा योग्यता सन्निधिश्च वाक्यार्थज्ञाने हेतुः। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम् आकाङ्क्षा। अर्थाऽबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः। तथा च आकाङ्क्षादिरहितं वाक्यमप्रमाणम्। यथा– गौरश्वः पुरुषो हस्तीति न प्रमाणम्, आकाङ्क्षाविरहात्। वह्निना सिञ्चेदिति न प्रमाणम्, योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणम्, सान्निध्याभावात्।

❖ वाक्यं द्विविधं वैदिकं लौकिकञ्च, वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम्। लौकिकं त्वाप्तोक्तं प्रमाणम्, अन्यदप्रमाणम्। वाक्यार्थज्ञानं शाब्दज्ञानं, तत्करणं शब्दः।

❒



## अथावशिष्टगुणादिनिरूपणम्

❖ अयथार्थाऽनुभवस्त्रिविधः संशय-विपर्यय-तर्कभेदात्।

❖ एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहिज्ञानं संशयः। यथा स्थाणुर्वा पुरुषो वेति॥

❖ मिथ्याज्ञानं विपर्ययः। यथा शुक्तौ इदं रजतमिति।

❖ व्याप्यारोपेण व्यापकारोपस्तर्कः। यथा- यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यादिति॥

❖ स्मृतिरपि द्विविधा- यथार्थाऽयथार्था चेति। प्रमाजन्या यथार्था, अप्रमाजन्या अयथार्था॥

❖ सर्वेषामनुकूलतया वेदनीयं सुखम्॥

❖ सर्वेषां प्रतिकूलतया वेदनीयं दुःखम्॥

❖ इच्छा कामः। क्रोधो द्वेषः। कृतिः प्रयत्नः॥

❖ विहितकर्मजन्यो धर्मः। निषिद्धकर्मजन्योऽधर्मः॥

❖ बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः। बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च। नित्या ईश्वरस्य अनित्या जीवस्य।

❖ संस्कारस्त्रिविधः- वेगो, भावना, स्थितिस्थापकश्चेति। वेगः पृथिव्यादिचतुष्टयमनोमात्रवृत्तिः। अनुभवजन्या स्मृतिहेतुर्भावना, आत्ममात्रवृत्तिः। अन्यथाकृतस्य पुनस्तदवस्थाऽऽपादकः स्थितिस्थापकः, कटादिपृथिवीवृत्तिः॥

❖ चलनात्मकं कर्म। उर्ध्वदेशसंयोगहेतुरुत्क्षेपणम्। अधोदेशसंयोगहेतुरपक्षेपणम्। शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम्। शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम्। अन्यत्सर्वं गमनम्॥

❖ नित्यमेकमनेकानुगतं सामान्यम्। द्रव्यगुणकर्मवृत्ति। तद् द्विविधं पराऽपरभेदात्। परं सत्ता अपरं द्रव्यत्वादि॥

❖ नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः॥


Scanned by CamScanner

- नित्यसम्बन्धः समवायः। अयुतसिद्धवृत्तिः। ययोर्द्वयोर्मध्ये एकमविनश्यत् तदवस्थमपरा-ऽऽश्रितमेवाऽवतिष्ठते तावयुतसिद्धौ। यथा-अवयवाऽवयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति॥
- अनादिः सान्तः प्रागभावः। उत्पत्तेः पूर्वं कार्यस्य॥
- सादिरनन्तः प्रध्वंसः। उत्पत्त्यनन्तरं कार्यस्य॥
- त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः।
  यथा भूतले घटो नास्तीति॥
- तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः।
  यथा घटः पटो नेति॥
- सर्वेषामपि पदार्थानां यथायथमुक्तेष्वन्तर्भावात् सप्तैव पदार्था इति सिद्धम्॥

**काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये।**
**अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः॥**

**॥ इति श्रीमदन्नम्भट्टकृतस्तर्कसंग्रहः ॥**


Scanned by CamScanner